पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ।
सपङ्कामनलङ्कारां विपद्मामिव पद्मिनीम् ॥ २१ ॥
व्रीडितां दुःखसंतप्तां परिम्लानां तपस्विनीम् ।
ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ॥ २२ ॥
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ।
शोकध्यानपरां दीनां नित्यं दुःखपरायणाम् ॥ २३ ॥
तस्य सन्दिदिहे बुद्धिर्मुहुः सीतां निरीक्ष्य तु ।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ २४ ॥
दुःखेन बुबुधे सीतां हनुमाननलंकृताम् ।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥ २५ ॥
तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् ।
तर्कयामास सीतेति कारणैरुपपादिभिः ॥ २६ ॥
वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् ।
तान्याभरणजालानि शाखाशोभीन्यलक्षयत् ॥ २७ ॥

*पीतेनेति*—क्लिष्टेन जीर्णतया प्रतीतेन पीतेन एकेन उत्तमवाससा संवीताम् अनलङ्काराम् अलङ्कृतिरहिताम् अत एव विपद्मां पद्मिनीं सरसीमिव सपङ्कां मलिनाम् ।

*व्रीडितामिति*—दुःखसंतप्तां वियोगजनितदुःखाक्रान्तामत एव अङ्गारकेण भौमेन ग्रहेण पीडितां रोहिणीमिव पीडिताम् ।

*अश्रुपूर्णेति*—अश्रुपूर्णमुखीम् अत एव दीनां क्षीणां तत्त्वेन प्रतीयमानाम् अनशनेन भोजनाभावेन कृशाम् अत एव शोकध्यानपरां शोकहेतुकचिन्ताक्रान्तां नित्यं दुःखपरायणां सीतां ददर्शेत्यनुकृष्यते ।

*तस्येति*—आम्नायानाम् अभ्यासानाम् अयोगेन प्रशिथिलां विद्यामिव तां सीतां निरीक्ष्य तस्य हनुमतो बुद्धिः सन्दिदिहे ।

*दुःखेनेति*—संस्कारेण यथोचितस्नानादिरूपसंस्कृत्या हीनाम् अतएव अर्थान्तरगतां वाचमिव अनलङ्कृता सीता दुःखेन बुबुधे ।

*तामिति*—तां सीतां समीक्ष्य कारणैरुपपादिभिः हेतुभिः इयं सीतेति तर्कयामास अनुमानेन निश्चयं चकार ।

**वैदेह्या इति**—तदा प्रस्थानसमये वैदेह्या अङ्गेषु यान्याभरणजालानि रामोऽन्वकीर्तयत् तानि शाखाशोभीनि शाखायां शोभन्ते इति शाखाशोभीनि भर्तृविरहकाले भूषणधारणस्यानुचितत्वात् स्वाङ्गेभ्य उन्मुच्य शाखायां न्यस्तानीत्यर्थः अलक्षयत् अपश्यत ।

तत्र यान्यवहीनानि तान्यहं नोपलक्षये ।
भूषणानि विचित्राणि दृष्टानि धरणीतले ।
अनयैवापविद्धानि स्वनवन्ति महान्ति च ॥ २८ ॥
इदं चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् ।
तथापि नूनं तद्वर्णं तथा श्रीमद्यथेतरत् ॥ २९ ॥
इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया ।
प्रनष्टाऽपि सती याऽस्य मनसो न प्रणश्यति ॥ ३० ॥
अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् ।
तेनेयं स च धर्मात्मा मुहूर्त्तमपि जीवति ॥ ३१ ॥
दुष्करं कृतवान् रामो हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ३२ ॥
एवं सीतां तदा दृष्ट्वा हृष्टः पवनसंभवः ।
जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥ ३३ ॥
स मुहूर्तमिव ध्यात्वा बाष्पपर्याकुलेक्षणः ।
सीतामाश्रित्य तेजस्वी हनुमान् विललाप ह ॥ ३४ ॥

*तत्रेति*—तत्र रामाज्ञापिताभरणेषु यानि अवहीनानि ऋष्यमूकादौ पतितान्यहं नोपलक्षये । अनयैव अपविद्धानि परिक्षिप्तानि भूषणानि दृष्टानि ।

*इदमिति*—यद्यपि चिरगृहीतत्वाद्धेतोरिदं वसनं क्लिष्टवत्तरम् अतिबाधिताभ तथापि तद्वर्णं पीतवर्णविशिष्टं तथा श्रीमत् वह्वैश्वर्यलभ्यं यथा श्रीमत् इदं अन्तरीयं तथा इतरत् तद्वृत्तासक्तोत्तरीयमपि ।

*इयमिति*—प्रनष्टापि या अस्य रामस्य मनसः सती महिषी न प्रणश्यति तस्य रामस्य सा प्रिया श्रिया इयमेव ।

*अस्या इति*—अस्याः मनः तस्मिन् रामे तस्य रामस्य च मनः अस्यां तेन हेतुना इयं स च जीवति मुहूर्तमपि अन्यथा न जीवेदित्यर्थः ।

*दुष्करमिति*—अनया हीनः रामः आत्मनो देहं धारयति शोकेन च न अवसीदति सर्वविस्मारकखेदं प्राप्नोति तत् दुष्करं कृतवान् ।

*एवमिति*—तदा तस्मिन् काले एव सीतां दृष्ट्वा हृष्टः पवनसंभवः रामं मनसा जगाम प्रशशंस च ।

*स इति*—स हनुमान् मुहूर्तं ध्यात्वा सीतां सीतादुःखमाश्रित्यावलोक्य विललाप विविधमुवाच ।

मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया।
यदि सीताऽपि दुःखार्ता कालो हि दुरतिक्रमः ॥ ३५ ॥
रामस्य व्यवसायज्ञा लक्ष्मणस्य च धीमतः।
नात्यर्थं क्षुभ्यते देवी गङ्गेव जलदागमे ॥ ३६ ॥
तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्।
राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥ ३७ ॥
अस्या हेतोर्विशालाक्ष्या हतो वाली महाबलः।
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम्।
निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ ३८ ॥
सागरश्च मया क्रान्तः श्रीमान् नदनदीपतिः।
अस्या हेतोर्विशालाक्ष्याः पुरी चेयं निरीक्षिता ॥ ३९ ॥
यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत्।
अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥ ४० ॥
राज्यं वा त्रिषु लोकेषु सीता व जनकात्मजा।
त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात् कलाम् ॥ ४१ ॥
सर्वान् भोगान् परित्यज्य भर्तृस्नेहबलात्कृता।
अचिन्तयित्वा दुःखानि प्रविष्टा निर्जनं वनम् ॥ ४२ ॥

*मान्येति*—गुरुभिर्विनीतस्य शिक्षितस्य लक्ष्मणस्य गुरुप्रिया गुरोः रामस्य प्रिया सीता यदि दुःखार्ता तर्हि कालः परमात्मसंकेतः दुरतिक्रमः अतिक्रमितुमशक्यः।

*रामस्येति*—देवी सीता यतो रामस्य लक्ष्मणस्य च व्यवसायज्ञा अनिवार्यपराक्रमविज्ञात्री अतोऽत्यर्थमत्यन्तं न क्षुभ्यते। तत्र दृष्टान्तः जलदागमे वर्षर्तौ गङ्गा प्रयागस्थजाह्नवीव।

*तुल्येति*—तुल्यानि रामशीलादिसदृशानि शीलं वयश्च वृत्तमाचरणं च यस्याः तुल्ये अभिजनः कुलं लक्षणं सामुद्रिकोक्त सुलक्ष्म यस्याः तां वैदेहीं राघव एवार्हति अत एव इयं वैदेही एव तं राघवमर्हति॥

*अस्या इति*—अस्या हेतोर्वाली हतः। रक्षसां चतुर्दश सहस्राणि निहतानि॥

*सागर इति*—निरीक्षिताऽवलोकिता।

*यदीति*—अस्याः कृते प्राप्तये समुद्रान्तां मेदिनीं जगत् त्रिलोकीं वा परिवर्तयेत् भ्रामयेत् तर्हि युक्तमेव इति मे मतिर्निश्चयः।

*राज्यमिति*—त्रिषु लोकेषु राज्यमधिकमिति शेषः, सीता वाधिकेति विचार्यमाणे सतीति शेषः, सकलं त्रैलोक्यराज्यं सीताया कलां षोडशांशमपि नाप्नुयात्

*सर्वानिति*—भर्तृस्नेहबलात् सर्वान् भोगान् परित्यज्य दुःखानि अचिन्तयित्वा च कृता सहगमनविषयकप्रयत्नवती सीता वनं प्रविष्टा।

इमां तु शीलसंपन्नां द्रष्टुमर्हति राघवः ।
अस्या नूनं पुनर्लाभाद्राघवः प्रीतिमेष्यति ॥ ४३ ॥
कामभोगैः परित्यक्ता हीना बन्धुजनेन च ।
धारयत्यात्मनो देहं तत्समागमलालसा ॥ ४४ ॥
नैषा पश्यति राक्षस्यो नेमान् पुष्पफलद्रुमान् ।
एकस्थहृदया नूनं राममेवानुपश्यति ॥ ४५ ॥
भर्ता नाम परं नार्या भूषणं भूषणादपि ।
एषा विरहिता तेन भूषणार्हा न शोभते ॥ ४६ ॥
इमामसितकेशान्तां शतपत्रनिभेक्षणाम् ।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः ॥ ४७ ॥
तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् ।
विचिन्वतश्च वैदेहीं किञ्चिच्छेषा निशाऽभवत ॥ ४८ ॥
षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ।
शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम् ॥ ४९ ॥
अथमङ्गलवादित्रैः शब्दैः श्रोत्रमनोहरैः ।
प्राबुध्यत महाबाहुर्दशग्रीवो महाबलः ॥ ५० ॥

*इमामिति*—इमां सीतां राघवो द्रष्टुमर्हति । अस्याः सीताया लाभात् राघवः प्रीतिमेष्यति प्राप्स्यति ।

*कामेति*—कामभोगैः परित्यक्ता सीता तत्समागमलालसा रामसमागमविषयकोत्कटेच्छावती सती आत्मनो देहं धारयति ।

*न इति*—एकस्थ हृदया एषा सीता राममेवानुपश्यति, अतः राक्षस्यो राक्षसीः पुष्पफलद्रुमांश्च न पश्यति ।

*भर्तेति*—भर्ता भूषणादप्यधिकं नार्याः भूषणं स्त्रीशोभाहेतुः अतः भूषणार्हापि एषा सीता तेन रामेण विरहिता सती न शोभते ।

*इमामिति*—असिताः कृष्णाः केशाः यस्याः तां, तां प्रसिद्धां इमां दुःखितां दृष्ट्वा ममापि मनो व्यथितम् ।

*तथेति*—वैदेहीं विचिन्वतः अतएव तथा उक्तप्रकारेण वनं विप्रेक्षमाणस्य हनुमतो निशा किंचिच्छेषा अभवत् ।

*षडङ्गेति*—षडङ्गवेदविदुषां वेदवेदितॄणाम् अतएव क्रतुप्रवरयाजिनां ब्रह्मरक्षसां ब्राह्मणराक्षसानां ब्रह्मघोषान् वेदनिनदान् विरात्रे रात्र्यवसाने शुश्राव हनूमानितिशेषः ।

*अथेति*—मङ्गलवादित्रैः माङ्गलिकवाद्यवद्भिः राक्षसैः कर्तृभिः श्रोत्रमनोहरैः शब्दैः दशग्रीवः प्राबुध्यत ।

विबुध्य तु यथाकालं राक्षसेन्द्रः प्रतापवान् ।
अशोकवनिकामेव प्राविशत् सन्ततद्रुमाम् ।
वृतः परमनारीभिः ताराभिरिव चन्द्रमाः ॥ ५१ ॥
रावणोऽयं महाबाहुरिति संचिन्त्य वानरः ।
पत्रगुल्मान्तरे सक्तो हनुमान् संवृतोऽभवत् ॥ ५२ ॥
सीतामसित-केशान्तामुपावर्तत रावणः ।
स तां पतिव्रतां दीनां निरानन्दां तपस्विनीम् ।
साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥ ५३ ॥
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ।
सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ ५४ ॥
ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे यशश्च मे ।
किं करिष्यसि रामेण सुभगे चीरवाससा ॥ ५५ ॥
निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः ।
व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥ ५६ ॥
तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ॥ ५७ ॥

*विबुध्येति*—राक्षसेन्द्रः विबुध्य सन्ततद्रुमां नित्यं द्रुमविशिष्टाम् अशोकवनिकामेव ताराभिः चन्द्रमा इव नारीभिः वृतः सन् प्राविशत् ।

*रावणोऽयमिति*—अयं रावण इति सचिन्त्य वानरः पत्रगुल्मान्तरे पत्रसमूहान्तरे सक्तः सन् संवृतोऽभवत् गूढोऽभवत् । असितकेशान्तां सीतां रावणः उपावर्तत तत्समीपं प्राप ।

*स इति*—स रावणः पतिव्रतां निरानन्दाम् अतएव दीनां सीतां साकारैरभिप्रायसहितैः वाक्यैः न्यदर्शयत अब्रवीत् ।

*बह्वीनामिति*—इतस्तत आहृतानां मम सर्वासामेव बह्वीनामुत्तमस्त्रीणां अग्रमहिषी भव । ते तव भद्रं कल्याणम् ।

*ऋद्धिमिति*—त्वं मम ऋद्धिं श्रियं च पश्य चीरवाससा चीराच्छादितेन रामेण किम् ।

*निक्षिप्तेति*—निक्षिप्तस्तव हरणादिना विनष्टः विजयः विजयसामर्थ्युत्साहादिर्यस्य अत एव गतश्रीः रामः जीवति न वा इत्यहं शङ्के विचारयामि ।

*तस्येति*—रक्षसस्तस्य रावणस्य तदुक्तं वचनं श्रुत्वा शुचिस्मिता सीता अन्तरतः मध्ये तृणं कृत्वा प्रत्युवाच ।

निवर्तय मनो मत्तः स्वजने क्रियतां मनः।
न मां प्रार्थयितुं युक्तं सुसिद्धिमिव पापकृत् ॥ ५८ ॥
अकार्यं न मया कार्यमेकपत्न्या विगर्हितम्।
नाहमौपयिकी भार्या परभार्या सती तव ॥ ५९ ॥
साधु धर्ममवेक्षस्व साधु साधुव्रतं चर।
यथा तव तथान्येषां दारा रक्ष्या निशाचर ॥ ६० ॥
इह सन्तो न वा सन्ति सतो वा नानुवर्तसे।
तथा हि विपरीता ते बुद्धिराचारवर्जिता ॥ ६१ ॥
विदितः स हि धर्मज्ञः शरणागतवत्सलः।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ ६२ ॥
मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि।
एवं हि ते भवेत् स्वस्ति संप्रदाय रघूत्तमे ॥
अन्यथा त्वं हि कुर्वाणो बधं प्राप्स्यसि रावण ॥ ६३ ॥
सीताया वचनं श्रुत्वा परुषं राक्षसाधिपः।
प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनम् ॥ ६४ ॥

*निवर्तयेति*—मत्तः मनः निवर्तय स्वजनः स्वभार्यादिः तस्मिन् मनः क्रियताम्। पापकृत् सुसिद्धिमिव मां प्रार्थयितुं न युक्तम्। एक पत्न्या पतिव्रतया मया विगर्हितं पतिविरोधि कर्तृकत्वेन निन्दितं कार्यं कुत्सितस्त्रीभिः कर्तव्यं मया अकार्यं न कारयितव्यम्।

*नाहमिति*—तव भार्याभिः परभार्या अत्यन्तं सेविता सती औपयिकी रक्षणोपायसाधिका अहं न भविष्यामीति शेषः, अत एव साधु धर्मं साधु अवेक्षस्व चिन्तय, अत एव साधुव्रतं संकल्पं चर कुरु। हे निशाचर, दारा यथा तव रक्ष्याः तथा अन्येषामपि रक्ष्याः।

*इहेति*—इह लङ्कायां सन्तो महात्मानो न सन्ति वा सतो विद्यमानान् वा महात्मान्ते नानुवर्तसे अत एव ते बुद्धिः तथा विपरीता विरुद्धकर्मविषयिणी आचारवर्जिता च अस्तीति शेषः। एतेन त्वया महात्मानोऽनुसर्तव्या इति सूचितम्।

*विदित इति*—शरणागतवत्सलो यो रामः तेन सह तव मैत्री भवतु।

*मामिति*—अस्मै रामाय मां निर्यातयितुमर्हसि दातुमर्हसि त्वम्। एवम् अनेन प्रकारेण रघूत्तमे सम्प्रदाय प्रापय ते स्वस्ति भवेत्, अन्यथा कुर्वाणस्त्वं हे रावण, बधं प्राप्स्यसि।

*सीताया इति*—सीतायाः परुषं वचनं श्रुत्वा राक्षसाधिपः प्रियदर्शनां सीतां प्रत्युवाच।

वामः कामो मनुष्याणां यस्मिन् किल निबध्यते ।
जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ॥ ६५ ॥
एतस्मात्कारणान्न त्वां घातयामि वरानने ।
द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः ॥ ६६ ॥
ऊर्ध्वं द्वाभ्यां तु मासाभ्यां भर्तारं मामनिच्छतीम् ।
मम त्वां प्रातराशार्थमारभन्ते महानसे ॥ ६७ ॥
इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः ।
प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम् ॥ ६८ ॥
हनुमानपि विश्रान्तः सर्वं शुश्राव तत्त्वतः ।
ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ ६९ ॥
यां कपीनां सहस्राणि सुबहून्ययुतानि च ।
दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ ७० ॥
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
सममक्लिष्टकर्माणं स्वबन्धुमनुकीर्तयन् ॥ ७१ ॥

*वाम इति*—यस्मिन् जने वामः सुन्दर उत्कट इत्यर्थः, काम इच्छा निबध्यते चिरं तिष्ठति तस्मिन् जने अनुक्रोशः दया स्नेहश्च जायते एतेनाक्रोशस्नेहयोः क्रोधविध्वंसकत्वं सूचितम् । एतस्मादुक्तात् कारणात् त्वां न घातयामि ।

*द्वाविति*—योऽवधिः मया कृतः 'मासान् द्वादश भामिनी' इत्यनेन अरण्य काण्डे निश्चितः तन्मध्ये अवशिष्टाविति शेषः द्वौ मासौ रक्षितव्यौ । द्वाभ्यां मासाभ्याम ऊर्ध्वं भर्तारं मां लङ्काश्रियमनिच्छन्तीं त्वां मम प्रातराशाय प्रातःकालिकाशनार्थं महानसे पाकशालायां आरभन्ते आलभन्ते रलयोरभेदः 'आलम्भः स्पर्शहिंसयोः' इत्यमरः मम रावणस्य प्रातःकालिक भोजनार्थं त्वां सीतां हनिष्यन्तीति भावः ।

*इतीति*—स दशग्रीवः रावणः मैथिलीमित्युक्त्वा मेदिनीं पृथिवीं कम्पयन् इव प्रस्थितः ।

*हनुमानिति*—विश्रान्तः अपनीतश्रमः हनुमान् सर्वं तत्त्वतः शुश्राव । ततोऽनन्तरं बहुविधाम् अनेकप्रकारां चिन्तां चिन्तयामास चकार ।

*यामिति*—यां सीतां कपीनां बहूनि सहस्राणि अयुतानि च सर्वासु दिक्षु मार्गन्ते सा इयं मया आसादिता प्राप्ता ।

*अहमिति*—अक्लिष्टकर्माणं क्लेशकारकक्रियारहितं स्वबन्धुं स्वस्याः सीतायाः बन्धुं प्रियं रामम् अनुकीर्तयन् अहं एनां सीतां आश्वासयामि आश्वासयिष्यामि ।

सोऽवतीर्य द्रुमात्तस्माद्विद्रुमप्रतिमाननः ।
विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ ७२ ॥
तामब्रवीन्महातेजा हनुमान् मारुतात्मजः ।
शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥ ७३ ॥
का त्वं भवसि कल्याणि त्वमनिन्दितलोचने ।
महिषी भूमिपालस्य राजकन्याऽसि मे मता ॥ ७४ ॥
रावणेन जनस्थानाद् बलादपहृता यदि ।
सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ॥ ७५ ॥
यथा हि तव वा दैन्यं रूपं चाप्यतिमानुषम् ।
तपसा चान्वितो वेषस्त्वं राममहिषी ध्रुवम् ॥ ७६ ॥
सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता ।
उवाच वाक्यं वैदेही हनुमन्तं द्रुमाश्रितम् ॥ ७७ ॥
स्नुषा दशरथस्याहं शत्रुसैन्यप्रमाथिनः ।
दुहिता जनकस्याहं वैदेहस्य महात्मनः ॥
सीता च नाम नाम्नाऽहं भार्या रामस्य धीमतः ॥ ७८ ॥
वसतो दण्डकारण्ये तस्याहममितौजसः ।
रक्षसाऽपहृता भार्या रावणेन दुरात्मना ॥ ७९ ॥

---

*स इति*—विद्रुमप्रतिमं विद्रुमसदृशमाननं यस्य स हनूमान् शिरसि अञ्जलिमाधाय धृत्वा मधुरया गिरा अब्रवीत् । श्लोकद्वयमेकान्वयि ।

*का इति*—हे अनिन्दितलोचने त्वं का भवसि ? भूमिपालस्य निखिलब्रह्माण्डाधिपतेः रामस्य महिषी राजकन्या जनकराजपुत्री च मे मम मता निश्चिता असि ।

*रावणेनेति*—जनस्थानात् रावणेन बलाद् अपहृता सीता यदि त्वमसि तदा पृच्छते मे आचक्ष्व ।

*यथेति*—यथा यथावत् तव दैन्यं वियोगदुःखजनितदीनता अतिमानुषं मानुषानतिक्रान्तम् अत्यद्भुतमित्यर्थः तव रूपं च तपसा अन्वितस्तव वेषश्च अस्तीति शेषः अतस्त्वं राममहिष्येव ।

*सा इति*—सा सीता तस्य हनुमतो वचनं श्रुत्वा रामकीर्तनहर्षिता सती द्रुमाश्रितं हनूमन्तमुवाच ।

*स्नुषेति*—शत्रुसैन्यप्रमाथिनः दशरथस्याहं स्नुषा पुत्रबधूः, महात्मनो जनकस्याहं दुहिता पुत्री, नाम्नाहं सीता नाम सीतेति प्रसिद्धा, रामस्य भार्याहमस्मीति शेषः ।

*वसत इति*—दण्डकारण्ये वसतः तस्य रामस्य भार्याहं रक्षसापहृता ।

द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः ।
ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ॥ ८० ॥
तस्यास्तद्वचनं श्रुत्वा हनुमान् हरियूथपः ।
दुःखाद्दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥ ८१ ॥
अहं रामस्य सन्देशाद्देवि दूतस्तवागतः ।
वैदेहि कुशली रामस्त्वां च कौशलमब्रवीत् ॥ ८२ ॥
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः ।
कृतवाञ्छोकसन्तप्तः शिरसा तेऽभिवादनम् ॥ ८३ ॥
सा तयोः कुशलं देवी निशम्य नरसिंहयोः ।
प्रीतिसंहृष्टसर्वाङ्गी हनुमन्तमथाब्रवीत् ॥ ८४ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ८५ ॥
क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् ।
वानराणां नराणां च कथमासीत् समागमः ॥ ८६ ॥

*द्वाविति*—तेन रक्षसा द्वौ मासौ मे जीवतानुग्रहः जीवनावधिरित्यर्थः कृतः । किंच द्वौ मासौ जीवितानुग्रहः कृतः अतः ततः ताभ्यां मासाभ्यामूर्ध्वं जीवितं त्यक्ष्यामि रामानागमने त्यक्तुमिच्छामि ।

*तस्या इति*—दुःखाभिभूतायाः तस्याः सीताया वचनं श्रुत्वा दुःखात् दुःखं प्राप्य हनूमान् सान्त्वं सान्त्वनमुत्तरमब्रवीत् ।

*अहमिति*—रामस्य दूतोऽहं सन्देशात् हेतोः तव समीपमुपागतः । ननु कः सन्देश इत्यत आह–वैदेहीति । हे वैदेहि, कुशली रामः त्वां कौशलमब्रवीत् अकथयत् किंच त्वा त्वत्कौशलमब्रवीत् अपृच्छत् ।

*लक्ष्मण इति*—लक्ष्मणोऽभिवादनं ते कृतवान् ।

*सेति*—सा सीता तयोः रामलक्ष्मणयोः कुशलं निशम्य प्रीतिसंहृष्टसर्वाङ्गी प्रीतिपुलकितसर्वाङ्गी सती हनुमन्तमब्रवीत् ॥

*कल्याणीति*—जीवन्तं नरं वर्षशतादपि आनन्दः एति प्राप्नोति इयं लौकिकी गाथा कल्याणी सत्येत्यर्थः ॥

*क्वेति*—ते तव रामेण संसर्गो भाषणादिसम्बन्धः क कस्मिन् देशेऽभवदिति शेषः । समागमः सङ्गमः कथमासीत् नरवानराचरणयोः परस्परं विरुद्धत्वात्संसर्गो न संभवतीति तात्पर्यम् ॥

यानि लिङ्गानि रामस्य लक्ष्मणस्य च वानर।
तानि भूयः समाचक्ष्व न मां शोकः समाविशेत् ॥ ८७ ॥
एवमुक्तस्तु वैदेह्या हनुमान् मारुतात्मजः।
ततो रामं यथातत्त्वम् आख्यातुमुपचक्रमे ॥ ८८ ॥
रामः कमलपत्राक्षः सर्वभूतमनोहरः।
रूपदाक्षिण्यसंपन्नः प्रसूतो जनकात्मजे ॥ ८९ ॥
तेजसाऽऽदित्यसंकाशः क्षमया पृथिवीसमः।
बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥ ९० ॥
रक्षिता जीवलोकस्य स्वजनस्य च रक्षिता।
मर्यादानां च लोकस्य कर्ता कारयिता च सः ॥ ९१ ॥
सत्यधर्मपरः श्रीमान् संग्रहानुग्रहे रतः।
देशकालविभागज्ञः सर्वलोकप्रियंवदः ॥ ९२ ॥
भ्राताऽपि तस्य द्वैमात्रः सौमित्रिरपराजितः।
अनुरागेण रूपेण गुणैश्चैव तथाविधः ॥ ९३ ॥
तावुभौ नरशार्दूलौ त्वद्दर्शनसमुत्सुकौ।
विचिन्वन्तौ महीं कृत्स्नां अस्माभिरभिसङ्गतौ ॥ ९४ ॥

*यानीति*—लिङ्गानि चिह्नानि भूयः समाचक्ष्व कथयतो मां शोको न समाविशेत्।

*एवमिति*—वैदेह्या एवमुक्तो हनुमान् रामं यथातत्त्वं याथार्थ्यमनतिक्रम्य आख्यातुं कथयितुमुपचक्रमे।

*राम इति*—रामः रूपदाक्षिण्याभ्यां संपन्नः सन्नेव प्रसूतः प्रादुर्भूतः । न तु प्रादुर्भूत्यनन्तरं रूपदाक्षिण्यं जातमित्यर्थः तेन तयोर्नित्यत्वं व्यञ्जितम्।

*तेजसेति*—तेजसा आदित्यसंकाशः सूर्यसमः यशसा वासवोपमः इन्द्रोपमः राम अस्तीति शेषः।

*रक्षितेति*—जीवन्ति जीवयन्तीति च व्युत्पत्त्या जीवशब्देन जीवेश्वरयोर्ग्रहणम्। लोका निखिलब्रह्माण्डानि समाहारद्वन्द्वः तस्य रक्षिता श्रुतिश्च 'तमीश्वराणां परमं महेश्वरम्' इत्यादि। मर्यादानां लोकस्य कर्ता कारयिता च स राम इति भावः।

*सत्येति*—सत्य धर्मपरः. संग्रहानुग्रहेरतः संग्रहो धनबलादीनाम्, अनुग्रहस्ताभ्याँ प्रजारक्षणम्, तदुभयनिष्ठः रामः अस्तीति शेषः।

*भ्रातेति*—तस्य रामस्य सौमित्रिर्भ्राता द्वैमात्रः राममात्रपेक्षया द्वितीयमातृजनित इत्यर्थः अनुरागादिभिस्तथाविधः रामसदृशः।

*ताविति*—त्वद्दर्शन समुत्सुकौ रामलक्ष्मणौ अत एव विचिन्वन्तौ सन्तौ अस्माभिरभिसङ्गतौ बभूवतुरिति शेषः॥

ततस्त्वन्नाशजं शोकं रामस्याक्लिष्टकर्मणः ।
लक्ष्मणो वानरेन्द्राय सुग्रीवाय न्यवेदयत् ॥ ९५ ॥
ततस्त्वद्गात्रशोभीनि रक्षसा ह्रियमाणया ।
यान्याभरणजालानि पातितानि महीतले ॥
तानि रामाय दत्तानि मयैवोपहृतानि च ॥ ९६ ॥
तान्यङ्के दर्शनीयानि कृत्वा बहुविधं तव ।
तेन देवप्रकाशेन देवेन परिदेवितम् ॥ ९७ ॥
स त्वां मनुजशार्दूलः क्षिप्रं प्राप्स्यति राघवः ।
समित्रबान्धवं हत्वा रावणं जनकात्मजे ॥ ९८ ॥
सहितौ रामसुग्रीवावुभावकुरुतां तदा ।
समयं वालिनं हन्तुं तव चान्वेषणं तथा ॥ ९९ ॥
ततो निहत्य तरसा रामो वालिनमाहवे ।
सर्वर्क्षहरिसङ्घानां सुग्रीवमकरोत् पतिम् ॥ १०० ॥
रामसुग्रीवयोरैक्यं देव्येवं समजायत ।
हनुमन्तं च मां विद्धि तयोर्दूतमिहागतम् ॥ १०१ ॥
स्वराज्यं प्राप्य सुग्रीवः समानीय महाकपीन् ।
त्वदर्थं प्रेषयामास दिशो दश महाबलान् ॥ १०२ ॥

*तत इति*—ततः सुग्रीववृत्तान्त श्रवणानन्तरं त्वन्नाशजं त्वददर्शनजनितं रामस्य शोकं लक्ष्मणः सुग्रीवाय न्यवेदयत् ।

*तत इति*—रक्षसा ह्रियमाणया त्वया यान्याभरणजालानि पातितानि तानि रामाय दत्तानि वानरैरितिशेषः, मयैवोपहृतानि प्रथममिति शेषः ।

*तानीति*—तानि आभरणानि अङ्के कृत्वा तेन देवप्रकाशेन देवतावतारेण अत एव देवेन रामेन बहुविधं परिदेवितम् ।

*स इति*—स राघवः रावणं हत्वा त्वां क्षिप्रं शीघ्रं प्राप्स्यति ।

*सहिताविति*—सहितौ एकीभूतौ उभौ रामसुग्रीवौ वालिन हन्तुं तवान्वेषणं कर्तुं च समयं प्रतिज्ञाम् अकुरुताम् ।

*तत इति*—रामः वालिनं निहत्य सुग्रीवं निखिलऋक्षादीनां पतिमकरोत् ।

*रामेति*—एवमुक्तप्रकारेण रामसुग्रीवयोः ऐक्यं सख्यं समजायत । मां तु तयोर्दूतं हनुमन्तं विद्धि जानीहि ।

*स्वराज्यमिति*—सुग्रीवः स्व-राज्यं प्राप्य अत एव महाकपीन् समानीय त्वदर्थं प्रेषयामास ।

आदिष्टा वानरेन्द्रेण सुग्रीवेण वनौकसः।
चरन्ति वसुधां कृत्स्नां वयमन्ये च वानराः॥ १०३॥
विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः।
अचिराद्राघवो देवि त्वामितो नयिताऽनघे॥ १०४॥
एतत्ते सर्वमाख्यातं समाश्वसिहि मैथिलि।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम॥ १०५॥
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना।
समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि॥ १०६॥
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम।
भर्तारमिव संप्राप्ता जानकी मुदिताऽभवत॥ १०७॥
ततः सा ह्रीमती बाला भर्तृसन्देशहर्षिता।
परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम॥ १०८॥
विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम।
येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम॥ १०९॥
दिष्ट्या स कुशली रामो धर्मात्मा सत्यसङ्गरः।
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः॥ ११०॥

---

*आदिष्टा इति*—वानरेन्द्रेण सुग्रीवेण आदिष्टा वनौकसः कृत्स्नां वसुधां चरन्ति। वयं चरामः अन्ये वानराः च चरन्तीति शेषः।

*विश्वासार्थमिति*—हे वैदेहि, मया तव विश्वासार्थं भर्तुर्गुणा उक्ताः। हे अनघे निष्पापे, अचिरात् शीघ्रं राघवस्त्वामितो नयिता नेता।

*एतदिति*—हे मैथिलि, एतत् भवत्या पृष्टं सर्वमाख्यातम् अतः समाश्वसिहि धीरा भव। देवि इदं रामनामाङ्कितम् अङ्गुलीयकं च पश्य।

*प्रत्ययार्थमिति*—तव प्रत्ययार्थं विश्वासार्थं तेन महात्मना रामेण दत्तम् अङ्गुलीयकमिति शेषः आनीतं मयेति शेषः। अत एव क्षीणः दुःखफलः दुःखफलकः समयो यस्याः सा त्वमसि अत एव समाश्वसिहि।

*गृहीत्वेति*—भर्तुः करविभूषणं गृहीत्वा भर्तारं संप्राप्तेव जानकी मुदिता अभवत्।

*तत इति*—ततोऽनन्तरं भर्तुः सन्देशेन हर्षिता सा सीता महाकपिं हनुमन्तं प्रियं प्रीतिविषयीभूतं कृत्वा प्रशशंस।

*विक्रान्त इति*—येन हेतुना एकेन त्वया राक्षसपदं प्रधर्षितं तेन हेतुना विक्रान्तत्वादिविशिष्टस्त्वं मयाऽबोधीति शेषः।

*दिष्ट्येति*—कुशली कुशलविशिष्टः।

कुशली यदि काकुत्स्थः किं न सागरमेखलाम्।
महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥ १११ ॥
अथवा शक्तिमन्तौ तौ सुराणामपि निग्रहे।
ममैव तु न दुःखानाम् अस्ति मन्ये विपर्ययः ॥ ११२ ॥
कच्चिन्न व्यथितो रामः कच्चिन्न परितप्यते।
उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥ ११३ ॥
कच्चिन्न विगतस्नेहः विवासान्मयि राघवः।
कच्चिन्मां व्यसनादस्मात मोक्षयिष्यति वानर ॥ ११४ ॥
सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः।
शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ ११५ ॥
न त्वामिहस्थां जानीते रामः कमललोचने।
तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ॥ ११६ ॥
श्रुत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः।
चमूं प्रकर्षन् महतीं हर्यृक्षगणसंकुलाम् ॥ ११७ ॥
विष्टम्भयित्वा बाणौघैरक्षोभ्यं वरुणालयम्।
करिष्यति पुरीं लङ्कां काकुत्स्थः शान्तराक्षसाम् ॥ ११८ ॥

*कुशलीति*—यदि काकुत्स्थः कुशली तर्हि कोपेन ज्ञातपृथिव्यपराधजनितक्रोधेन महीं किं नु न दहति दहत्येवेत्यर्थः। एतेन एवं शक्तिसत्त्वे रावणं कुतो न निहन्तीति सूचितम्। किं च कोपेन रावणापराधजनितक्रोधेन महीं लङ्काभूमिं किं नु दहति।

*अथवेति*—अथवेति पक्षान्तरे सुराणामपि निग्रहे शक्तिमन्तौ तौ रामलक्ष्मणौ स्त एव तथापि मम दुःखानां विपर्ययो विनाशकालो नैवास्तीत्यहं मन्ये।

*कच्चिदिति*—रामः कच्चिन्न व्यथितः कच्चिन्न परितप्यते वा अत एव कार्याणि कर्तव्यानि उत्तराणि दुःखोत्तारकाणि प्रयत्नानि कुरुते।

*कच्चिदिति*—विवासात् हेतोः राघवः मयि विगतस्नेहो न कच्चित् अस्माद व्यसनात् दुःखहेतुभूतनिरोधात् मोक्षयिष्यति मोचयिष्यति।

*सीताया इति*—मारुतिः सीताया वचनं श्रुत्वा अञ्जलिं शिरसि आधाय उत्तरं श्रेष्ठं वाक्यमब्रवीत्।

*नेति*—इहस्थां त्वां रामो न जानीते तेन हेतुना शचीं पुरन्दर इव त्वामाशु नानयति।

*श्रुत्वेति*—मह्यं मम वचः श्रुत्वा एव राघवः एष्यति।

*विष्टम्भयित्वेति*—करुणालयं समुद्रं विष्टम्भयित्वा विष्टभ्य संस्तभ्य सेतुं बध्द्वेत्यर्थः लङ्कां बाणौघैः शान्तराक्षसां करिष्यति।

तवादर्शनजेनार्ये शोकेन स परिप्लुतः ।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ११९ ॥
अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते ॥ १२० ॥
अभिज्ञानं प्रयच्छ त्वं जानीयाद्राघवो हि यत् ।
ब्रूहि यद्राघवो वाच्यो लक्ष्मणश्च महाबलः ॥ १२१ ॥
इत्युक्तवति तस्मिंश्च सीता सुरसुतोपमा ।
उवाच शोकसन्तप्ता हनुमन्तं प्लवङ्गमम् ॥ १२२ ॥
कौसल्या लोकभर्तारं सुषुवे यं मनस्विनी ।
तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय ॥ १२३ ॥
वृद्धोपसेवी लक्ष्मीवान् शक्तो न बहुभाषिता ।
राजपुत्रप्रियः श्रेष्ठः सदृशः श्वशुरस्य मे ॥ १२४ ॥
मत्तः प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः ।
यं दृष्ट्वा राघवो नैव वृत्तमार्यमनुस्मरेत् ॥ १२५ ॥
स ममार्थाय कुशलं वक्तव्यो वचनान्मम ।
मृदुर्नित्यं शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः ॥ १२६ ॥
यथा हि वानरश्रेष्ठ दुःखक्षयकरो भवेत् ।
त्वदस्मिन् कार्यनिर्योगे प्रमाणं हरिसत्तम ॥ १२७ ॥

---

*तवेति*—शोकेन परिप्लुतः परिपूरितः स रामः शर्म न लभते ।

*अनिद्र इति*—अनिद्रः प्रायेण निद्रारहितः रामः सुप्तः कथंचित् किञ्चित्स्वापं प्राप्तोऽपि सीतेति मधुरां वाणीं व्याहरन् सन् प्रतिबुध्यते ।

*अभिज्ञानमिति*—यत् यतः राघवो जानीयात् मत्कर्तृकत्वद्दर्शनं बुध्येत तदभिज्ञानं चिह्नं त्वं प्रयच्छ । राघवः यद्वाच्यः तद्ब्रूहि वद ।

*इतीति*—तस्मिन् हनुमति इति उक्तवति सति सीता हनुमन्तमुवाच ।

*कौसल्येति*—कौसल्या यं सुषुवे तं ममार्थे उद्युक्तमिति शेषः रामं सुखं पृच्छ अभिवादय च ।

*वृद्धेति*—शक्तः समर्थोऽपि बहुभाषिता न मितभाषीत्यर्थः यो राजपुत्रस्य रामस्य प्रियः । मे मम श्वशुरस्य सदृशः च ।

*मत्त इति*—मत्तः ममापीत्यर्थः, प्रियतरः अत्यन्तं प्रियः लक्ष्मणः अस्तीति शेषः । यं लक्ष्मणं दृष्ट्वा राघवः वृत्तं पितृनिर्याणादि नैव अनुस्मरेत् । स लक्ष्मणः ममार्थाय कुशलं वक्तव्यः ।

*मृदुरिति*—दुःखक्षयकरः दुःखनाशकः भवेत् लक्ष्मणः इति शेषः, हे हरिसत्तम, अस्मिन् कार्यनिर्योगे निर्वाहे त्वं प्रमाणम् ।

राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत ।
इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः ॥ १२८ ॥
जीवितं धारयिष्यामि मासं दशरथात्मज ।
ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते ॥ १२९ ॥
ततो वस्त्रगतं मुक्त्वा दिव्यं चूड़ामणिं शुभम ।
प्रदेयो राघवायेति सीता हनुमते ददौ ॥ १३० ॥
मणिरत्नं कपिवरः प्रतिगृह्याभिवाद्य च ।
हृदयेन गतो रामं शरीरेण तु विष्ठितः ॥ १३१ ॥
तस्माद्देशादपक्रम्य चिन्तयामास वानरः ।
अल्पशेषमिदं कार्यं दृष्टेयमसितेक्षणा ।
त्रीनुपायानतिक्रम्य चतुर्थ इह दृश्यते ॥ १३२ ॥
कार्ये कर्मणि निर्दिष्टे यो बहून्यपि साधयेत ।
पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति ॥ १३३ ॥
न ह्येकः साधको हेतुः स्वल्पस्यापीह कर्मणः ।
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥ १३४ ॥

*राघव इति*—त्वत्समारम्भात् त्वदुत्साहनात् राघवः मयि यत्नपरो भवेत अतः मे मम नाथं रामं पुनः पुनः इदं वक्ष्यमाणं ब्रूयाः ब्रूहि ।

*जीवितमिति*—हे दशरथात्मज, मासम् अवधिभूतमासपर्यन्तं जीवितं धारयिष्यामि । मासात् ऊर्ध्वं न जीवेयम् इति सत्येन सत्यं ते अहं ब्रवीमि ।

*तत इति*—ततोऽनन्तरं वस्त्रगतं दिव्यं चूडामणिं शिरोरत्नं मुक्त्वा उन्मुच्य राघवाय प्रदेय इत्युक्त्वा इति शेषः, हनुमते ददौ ।

*मणिरत्नमिति*—कपिवरो हनुमान् मणिरत्नं मणिश्रेष्ठं प्रतिगृह्य स्वीकृत्य अभिवाद्य च सीतामिति शेषः, हृदयेन मनसा रामं गतः शरीरेण तु विष्ठितः तत्र स्थितः आसीत् इति शेषः ।

*तस्मादिति*—वानरः हनुमान् तस्माद्देशाद् अपक्रम्य निर्गत्य चिन्तयामास । इयं सीता दृष्टा प्रधानकार्यं सिद्धमित्यर्थः । इदं परबलदर्शनरूपं कार्यमल्पशेषं स्वल्पं सत् शिष्यते, इह परबलदर्शनरूपकार्ये तु यतः त्रीन् सामादीन् उपायान् अतिक्रम्य चतुर्थो दण्ड एव उपायः दृश्यते ।

*कार्ये इति*—कार्ये स्वाम्याज्ञप्तकर्तव्ये कर्मणि निर्दिष्टे निश्चिते सति यो बहूनि निश्चितकार्यपोषकतया विपुलकार्याणि साधयेत् साधयितुमिच्छेत् स पूर्वकार्याविरोधेन नियतकार्यप्रातिकूल्यराहित्येन कार्यं कर्तुमर्हति ।

*नेति*—स्वल्पस्यापि कर्मणः रामकार्यस्य सीताप्राप्तेरित्यर्थः, साधको हेतुरेकः एव न बहवः सन्तीत्यर्थः सीतादर्शनमात्रेण रामकार्यसिद्धिर्न भवतीति तात्पर्यम्

इदमस्य नृशंसस्य नन्दनोपममुत्तमम् ।
वनं विध्वंसयिष्यामि शुष्कं वनमिवानलः ।
अस्मिन् भग्ने ततः कोपं करिष्यति दशाननः ॥ १३५ ॥
ततस्तु हनुमान् वीरो बभञ्ज प्रमदावनम् ।
चकार सुमहद्रूपं राक्षसीनां भयावहम् ॥ १३६ ॥
ततस्तं गिरिसंकाशं राक्षस्यो विकृताननाः ।
विरूपं वानरं भीममाख्यातुमुपचक्रमुः ॥ १३७ ॥
अशोकवनिकामध्ये राजन् भीमवपुः कपिः ।
सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः ॥ १३८ ॥
तेन त्वद्भुतरूपेण यत्तत्तव मनोहरम् ।
नानामृगगणाकीर्णं प्रमृष्टं प्रमदावनम् ॥ १३९ ॥
न तत्र कश्चिदुद्देशो यस्तेन न विनाशितः ।
यत्र सा जानकी सीता न स तेन विनाशितः ।
जानकीरक्षणार्थं वा श्रमाद्वा नोपलक्ष्यते ॥ १४० ॥
राक्षसीनां वचः श्रुत्वा रावणो राक्षसेश्वरः ।
आत्मनः सदृशान् शूरान् किंकरान् नाम राक्षसान् ॥
व्यादिदेश महातेजा निग्रहार्थं हनूमतः ॥ १४१ ॥

---

अतः अर्थं रामकार्यसाधकहेतुं बहुधा बहुप्रकारेण यो वेद स एव अर्थसाधने समर्थः

*इदमिति*—अस्य नृशंसस्य क्रूरस्य रावणस्य इदं वनं नन्दनोपमम् उत्तमं चास्तीति शेषः । इदम् उक्तं वनं शुष्कं वनं अनल इव अग्निरिव विध्वंसयिष्यामि । अस्मिन् भग्ने सति दशाननः रावणः कोपं करिष्यति ।

*तत इति*—ततोऽनन्तरं प्रमदाकुलवनिकां बभञ्ज । राक्षसीनां भयावहं भयंकरं रूपं चकार हनुमानिति शेषः ।

*ततस्तमिति*—ततोऽनन्तरं गिरिसंकाशं पर्वतसदृशं विरूपं वानरं विकृताननाः भयेन हेतुनेत्यर्थः राक्षस्यः आख्यातुं वर्णयितुमुपचक्रमुः ।

*अशोकेति*—सीतया कृतः संवादो येन सोऽमितविक्रमः कपिः तिष्ठति ।

*तेनेति*—यत् तव प्रमदावनं तत् तेन वानरेण प्रमृष्टं विध्वंसितम् ।

*नेति*—तेन वानरेण यः कश्चिदुद्देशः स्थलं न विनाशितः स तत्र वनिकायां नास्ति, यत्र देशे सा जानकी स देशस्तु तेन न विनाशितः । सीताधिकृतदेशः तेन जानकीरक्षणार्थं सीतारक्षणार्थं न विनाशितः अथवा श्रमात् न विनाशित इति नोपलक्ष्यते न निश्चीयते ।

*राक्षसीनामिति*—राक्षसीनां वचः श्रुत्वा हनूमतो निग्रहार्थं किंकरान् नाम किंकरनामकान् राक्षसान् रावणः व्यादिदेश आज्ञापयामास ।

ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः ।
आजघ्नुर्वानरश्रेष्ठं शरैश्चादित्यसंनिभैः ॥ १४२ ॥
ततः स किङ्करान् हत्वा हनुमान् दर्शयन् बलम् ।
चैत्यप्रासादमुत्प्लुत्य मेरुशृङ्गमिवोन्नतम् ।
धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ १४३ ॥
अस्त्रविज्जयतां रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ १४४ ॥
दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनुमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ॥ १४५ ॥
अर्दयित्वा पुरीं लङ्कां अभिवाद्य च मैथिलीम् ।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥ १४६ ॥
एवमुक्त्वा महाबाहुश्चैत्यस्थो हरियूथपः ।
ननाद भीमनिर्ह्रादो रक्षसां जनयन् भयम् ॥ १४७ ॥
ततस्तैः स्वगणैरिष्टैरिन्द्रजित् प्रतिपूजितः ।
स रथी धन्विनां श्रेष्ठः शस्त्रज्ञोऽस्त्रविदांवरः ॥
हनूमन्तमभिप्रेत्य जगाम रणपण्डितः ॥ १४८ ॥

*त इति*—ते किंकराः । गदाभिः काञ्चनाङ्गदैः काञ्चनपट्टबद्धैः परिघैश्च शरैश्च आजघ्नुः ।

*तत इति*—स हनुमान् बलं दर्शयन् चैत्यप्रासादम् उत्प्लुत्य धृष्टं निर्भयं आस्फोटयामास विदारयामास ।

*अस्त्रविदिति*—अस्त्रविद् रामः जयताम्, महाबलः लक्ष्मणश्च जयताम् । राघवेणाभिपालितः सुग्रीवो जयति ।

*दास इति*—अहं रामस्य दासः शत्रुसैन्यानां निहन्ता च अस्मि, रावण-सहस्रमपि मे मम युद्धे प्रतिबलं न भवेत् ।

*अर्दयित्वेति*—लङ्काम् अर्दयित्वा धर्षयित्वा समृद्धार्थो सफलमनोरथः गमिष्यामि ।

*एवमिति*—एवं पूर्वोक्तम् उक्त्वा चैत्यस्थः हनुमान् रक्षसां भयं जनयन् सन् ननाद ।

*तत इति*—स्वगणैः प्रतिपूजितः समादृतः स रथी रणपंडितः इन्द्रजित् मेघनादः हनूमन्तमभिप्रेत्य जगाम ।

तावुभौ वेगसम्पन्नौ रणकर्मविशारदौ ।
सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ॥ १४६ ॥
ततः पैतामहं वीरः सोऽस्त्रमस्त्रविदां वरः ।
सन्दधे सुमहातेजास्तं हरिप्रवरं प्रति ॥ १५० ॥
तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानरः ।
अभवन्निर्विचेष्टश्च पपात च महीतले ॥ १५१ ॥
तं मत्तमिव मातङ्गं बद्धं कपिवरोत्तमम् ।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ १५२ ॥
स तैः संपीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः ।
विस्मयं परमं गत्वा रक्षोधिपमवैक्षत ॥ १५३ ॥
भ्राजमानं ततो दृष्ट्वा हनुमान् राक्षसेश्वरम् ।
मनसा चिन्तयामास तेजसा तस्य मोहितः ॥ १५४ ॥
अहो रूपमहो धैर्यम् अहो सत्त्वमहो द्युतिः ।
अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १५५ ॥
यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः ।
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ १५६ ॥
तं समीक्ष्य महासत्त्वं सत्त्ववान् हरिसत्तमः ।
वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥ १५७ ॥

*ताविति*—तौ हनूमदिन्द्रजितौ सर्वभूतमनोग्राहि निखिलप्राणिहृदयापकर्षकं युद्धं चक्रतुः ।

*तत इति*—सुमहातेजाः इन्द्रजित् हरिप्रवरं प्रति पैतामहमस्त्रं सन्दधे ब्रह्मास्त्र-सन्धानमकरोत् ।

*तेनेति*—राक्षसेन अस्त्रेण करणेन बद्धो वानरः निर्विचेष्टोऽभवत्, अत एव महीतले पपात च ।

*तमिति*—राक्षसाः बद्धं कपिवरं रावणाय न्यवेदयन् ।

*स इति*—तैः रक्षोभिः संपीड्यमानोऽपि स हनुमान् विस्मयं गत्वा रक्षोधिपमवैक्षत ।

*भ्राजमानमिति*—भ्राजमान राक्षसेश्वरं दृष्ट्वा तस्य राक्षसेश्वरस्य तेजसा मोहितः कर्तव्यविषयकविवेकरहितो हनुमान् चिन्तयामास ।

*अहो इति*—राक्षसराजस्य रूपादिसर्वलक्षणयुक्तता च अहो आश्चर्यम् ।

*यदीति*—अयं राक्षसेश्वरः यदि अधर्मः धर्मविरोधी न स्यात् तर्हि सुरलोकस्यापि रक्षिता स्यात् ।

*तमिति*—महासत्त्वं तं रावणं समीक्ष्य अर्थवत् सप्रयोजनं वाक्यं हरिसत्तमो हनुमानुवाच ।

अहं तु हनुमान नाम मारुतस्यौरसः सुतः ।
सीतायास्तु कृते तूर्णं शतयोजनमायतम् ।
समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहागतः ॥ १५८ ॥
भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ।
तद्भवान दृष्टधर्मार्थस्तपःकृतपरिग्रहः ।
परदारान महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ १५६ ॥
न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १६० ॥
तत त्रिकालहितं वाक्यं धर्म्यमर्थानुबन्धि च ।
मन्यस्व नरदेवाय जानकी प्रतिदीयताम ॥ १६१ ॥
तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः ।
आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥ १६२ ॥
वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ।
निवेदितवतो दौत्यं नानुमेने विभीषणः ॥ १६३ ॥
तस्य तद्वचनं श्रुत्वा दशग्रीवो महात्मनः ।
देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत ॥ १६४ ॥

*अहमिति*—मारुतस्य औरसः मुख्यः सुतः हनुमान्नामाहं तु सीतायाः कृते सीतार्थं शतयोजनमायतं समुद्रं लंघयित्वा तां सीतां दिदृक्षुः सन् इह लङ्कायामागतः ।

*भ्रमतेति*—मया भ्रमता ते गृहे जनकात्मजा दृष्टा । दृष्टौ साक्षात्कृतौ धर्मार्थौ येन सः तपसा कृतः परिग्रहः धनादिसंग्रहो येन सः अत एव भवान पूज्यस्त्वं परदारान् उपरोद्धुं नार्हसि ।

*नहीति*—धर्मविरुद्धेषुधर्मशास्त्रविरुद्धेषु अत एव बह्वपायेषु विपुलापायसंपादकेषु अत एव मूलघातिषु कर्मसु भवद्विधा बुद्धिमन्तो न सज्जन्ते ।

*तदिति*—तत् उक्तहेतोः त्रिकालहितं सर्वकाले हितकारकं धर्म्यं धर्मादनपेतम् अर्थानुबन्धि अर्थानुयायि वाक्यं मन्यस्व अत एव नरदेवाय रामाय जानकी प्रतिदीयताम् ।

*तस्येति*—तस्य हनूमतः वचनं श्रुत्वा क्रोधमूर्च्छितो रावणः तस्य हनुमतो वधमाज्ञापयत् ।

*वध इति*—रावणेन वधे समाज्ञप्ते सति दौत्यं स्वनिष्ठदूतधर्मं निवेदितवतो हनूमतः वधे विभीषणो नानुमेने न अनुमतिं चकार । वध इत्युभयान्वयि ।

*तस्येति*—महात्मनो विभीषणस्य वचनं श्रुत्वा देशकालहितमुत्तरं वाक्यमब्रवीत् ।

कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् ।
तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥ १६५ ॥
तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः ।
वेष्टयन्तिस्म लाङ्गूलं जीर्णैः कार्पासजैः पटैः ॥
तैलेन परिषिच्याथ तेऽग्निं तत्राभ्यपातयन् ॥ १६६ ॥
लाङ्गूलं संप्रदीप्तं तद् द्रष्टुं तस्य हनूमतः ।
सहस्त्रीबालवृद्धाश्च जग्मुः प्रीतिं निशाचराः ॥ १६७ ॥
वीक्षमाणस्ततो लङ्कां कपिः कृतमनोरथः ।
वर्धमानसमुत्साहः कार्यशेषमचिन्तयत ॥ १६८ ॥
वनं तावत प्रमथितं प्रकृष्टा राक्षसा हताः ।
बलैकदेशः क्षपितः शेषं दुर्गविनाशनम ॥ १६९ ॥
दुर्गे विनाशिते कर्म भवेत सुखपरिश्रमम ।
अल्पयत्नेन कार्येऽस्मिन मम स्यात सफलः श्रमः ॥ १७० ॥
यो ह्ययं मम लाङ्गूले दीप्यते हव्यवाहनः ।
अस्य सन्तर्पणं न्याय्यं कर्तुमेभिर्गृहोत्तमैः ॥ १७१ ॥

---

*कपीनामिति*—लाङ्गूलं कपीनां भूषणम् अत एव इष्टं भवति । अतः अस्य तत् लाङ्गूलं दीप्यतां दग्धेन लाङ्गूलेन विष्टः सन् गच्छतु ।

*तस्येति*—तस्य रावणस्य वचनं श्रुत्वा कोपकर्कशाः अतिकोपवन्तो राक्षसाः तस्य हनूमतो लाङ्गूलं कार्पासजैः कार्पासोपादानकः पटैः वेष्टयन्ति स्म । अथ अनन्तरं तैलेन परिषिच्य अभिषिच्य तत्र लाङ्गूले अग्निम् अभ्यपातयन् ददुरित्यर्थः ।

*लाङ्गूलमिति*—तस्य हनूमतः संप्रदीप्तं लाङ्गूलं द्रष्टुं सहस्त्रीबालवृद्धाः निशाचराः जग्मुः ते च दृष्ट्वा प्रीतिं जग्मुरित्युभयान्वयि ।

*वीक्षमाण इति*—वर्धमानः समुत्साहो यस्य स हनूमान् कार्यशेषम् अवशिष्टकृत्यम् अचिन्तयत् ।

*वनमिति*—प्रकृष्टाः बलवन्तः राक्षसाः हताः बलैकदेशः सेनायाः कश्चिदंशः क्षपितः विनाशितश्च अतः दुर्गविनाशममेव शेषं पश्यामीति शेषः ।

*दुर्ग इति*—दुर्गे विनाशिते सति कर्म मम क्रिया सुखं सुखरूपः परिश्रमो यस्मिन् तत भवेत अतः अल्पयत्नेन साध्ये अस्मिन् दुर्गविनाशनरूपे कार्ये निष्पन्ने सतीति शेषः, मम श्रमः सफलः स्यात् ।

*य इति*—मम लाङ्गूले दीप्यते प्रकाशते यो हव्यवाहनो वह्निः अस्य संतर्पणमेभिर्गृहोत्तमैः कर्तुं न्याय्यम् ।

ततः प्रदीप्तलाङ्गूलः सविद्युदिव तोयदः ।
भवनाग्रेषु लङ्काया विचचार महाकपिः ॥ १७२ ॥
गृहाद्गृहं राक्षसानामुद्यानानि च वानरः ।
वीक्षमाणो ह्यसन्त्रस्तः प्रासादांश्च चचार सः ॥ १७३ ॥
लङ्कां समस्तां सन्दीप्य लाङ्गूलाग्निं महाबलः ।
निर्वापयामास तदा समुद्रे हरिसत्तमः ॥ १७४ ॥
ततस्तां शिंशुपामूले जानकीं पर्यवास्थिताम् ।
गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ॥ १७५ ॥
स लिलङ्घयिषुर्भीमं सलीलं लवणार्णवम् ।
कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ।
निपपात महेन्द्रस्य शिखरे पादपाकुले ॥ १७६ ॥
ततस्ते प्रीतमनसः सर्वे वानरपुङ्गवाः ।
हनूमन्तं महात्मानं परिवार्योपतस्थिरे ॥ १७७ ॥
प्रहृष्टवदनाः सर्वे तमरोगमुपागतम् ॥
उपायनानि चादाय मूलानि च फलानि च ।
प्रत्यर्चयन् हरिश्रेष्ठं हरयो मारुतात्मजम् ॥ १७८ ॥

---

*तत इति*—सविद्युत् तोयदो मेघ इव लङ्काया भवनाग्रेषु विचचार महाकपिः हनुमान् ।

*गृहादिति*—राक्षसानां गृहात् उन्नतभवनात् गृहम् उद्यानानि गृहारामांश्च वीक्षमाणो हनूमान् प्रासादान् चचार ।

*लङ्कामिति*—समस्तां लङ्कां संपीड्य हरिसत्तमः वानरश्रेष्ठः हनुमान् लाङ्गूलाग्निं समुद्रे निर्वापयामास ।

*तत इति*—ततोऽनन्तरं गमनाय मतिं विचारं कृत्वा शिंशुपामूले पर्यवस्थितां जानकीं अभ्यवादयत् नमश्चकार हनुमानिति शेषः ।

*स इति*—कल्लोलास्फालवेलान्तं तरङ्गैः स्फालिततीरोपान्तं भीमं लवणार्णवं सलीलं लीलापूर्वकं लिलङ्घयिषुः हरिः स हनूमान् नभ उत्पात । महेन्द्रस्य तदाख्यस्य पर्वतस्य पादपाकुले तरुसंकुलेशिखरे निपपात च ।

*तत इति*—सर्वे वानरपुङ्गवाः हनूमन्तं परिवार्य उपतस्थिरे । अरोगं कुशलपूर्वकं तम् उपागतं हरिश्रेष्ठं फलादीन्युपायनान्यादाय हरयः वानराः प्रतिपूजितवन्तः । सार्ध-श्लोकद्वयमेकान्वयि ।

हनूमांस्तु गुरून् वृद्धान् जाम्बवत्प्रमुखांस्तदा ।
कुमारमङ्गदं चैव सोऽवन्दत महाकपिः ॥ १७९ ॥
हनूमानब्रवीद्धृष्टस्तदा तान् वानरर्षभान् ।
अशोकवनिकासंस्था दृष्टा सा जनकात्मजा ।
रक्ष्यमाणा सुघोराभी राक्षसीभिरनिन्दिता ॥ १८० ॥
सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता ।
प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥ १८१ ॥
प्रतिमन्तस्ततः सर्वे वायुपुत्रपुरस्सराः ।
महेन्द्राद्रिं परित्यज्य पुप्लुवुः प्लवगर्षभाः ॥ १८२ ॥
प्लवमानाः खमुत्पत्य ततस्ते काननौकसः ।
निपेतुर्हरिराजस्य समीपे राघवस्य च ॥ १८३ ॥
हनूमांश्च महाबाहुः प्रणम्य शिरसा ततः ।
नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥ १८४ ॥
तत्र लङ्केति नगरी रावणस्य दुरात्मनः ।
दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ॥ १८५ ॥
तत्र सीता मया दृष्टा रावणान्तःपुरे सती ।
संन्यस्य त्वयि जीवन्ती रामा राममनोरथम् ॥ १८६ ॥

---

*हनूमानिति*—हनूमान् जाम्बवत्प्रमुखान् अवन्दत ।

*हनूमानब्रवीदिति*—हृष्टः प्रसन्नः हनूमान् सुघोराभिः राक्षसीभिः रक्ष्यमाणा अनिन्दिता निन्दासंसर्गरहिता अशोकवनिकासंस्था जनकात्मजा मया दृष्टेति वानरर्षभान् अब्रवीत् ।

*सेति*—प्रकृत्यैव स्वभावेनैव तन्वङ्गी सीता तद्वियोगात् रामवियोगजदुःखात् कर्शिता अतिकृशत्वं प्राप्ता अत एव प्रतिपत्पाठशीलस्य जनस्य विद्येव तनुतां गता ।

*प्रीतिमन्त इति*—ततोऽनन्तरं वायुपुत्रपुरःसराः प्रीतिमन्तः सर्वे वानरा महेन्द्राद्रिं महेन्द्रपर्वतं परित्यज्य त्यक्त्वा पुप्लुवुः जग्मुः ।

*प्लवमाना इति*—प्लवमाना उत्प्लुत्य गच्छन्तः ते काननौकसः वानराः हरिराजस्य सुग्रीवस्य राघवस्य च समीपे निपेतुः

*हनूमानिति*—हनूमान् प्रणम्य नियतां यतचित्ताम् अक्षतां विनाशरहितां देवीं सीतां राघवाय न्यवेदयत् ।

*तत्रेति*—तत्र प्रसिद्धे दक्षिणस्य समुद्रस्य तीरे रावणस्य लङ्केति नगरी वसति अस्ति ।

*तत्र सीतेति*—तत्र लङ्कायां रावणान्तःपुरे, त्वयि रामे मनोरथं सन्न्यस्य जीवन्ती सती रामा सीता मया दृष्टा ।

सा मया नरशार्दूल विश्वासमुपपादिता ।
रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ॥ १८७ ॥
अभिज्ञानं च मे दत्तं यथावृत्तं तवान्तिके ।
चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ॥ १८८ ॥
अयं चास्मै प्रदातव्यो यत्नात् सुपरिरक्षितः ।
एष निर्यातितः श्रीमान् मया ते वारिसंभवः ॥ १८९ ॥
जीवितं धारयिष्यामि मासं दशरथात्मज ।
ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ॥
इति मामब्रवीत् सीता कृशाङ्गी वरवर्णिनी ॥ १९० ॥
एवमुक्तो हनुमता रामो दशरथात्मजः ।
तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः ॥
नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ १९१ ॥
अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः ।
अस्याद्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ॥ १९२ ॥
चिरं जीवति वैदेही यदि मासं धरिष्यति ।
न जीवेयं क्षणमपि विना तामसितेक्षणाम् ॥ १९३ ॥
नय मामपि तं देशं यत्र दृष्टा मम प्रिया ।
न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ॥ १९४ ॥

*सेति*—हे नरशार्दूल राम, सा मार्गिता सीता मया विश्वासमुपपादिता विश्वासं प्रापिता च तथा राम सुग्रीवसख्यं रामस्यसुग्रीवस्य च मैत्रीं श्रुत्वा प्रीतिं प्रसन्नताम् उपागता प्राप्ता ।

*अभिज्ञानमिति*—चित्रकूटे वायसं जयन्तं प्रति तवान्तिके यद् वृत्तं वृत्तान्तं तदभिज्ञानं मत् संवादचिह्नं मे मह्यं दत्तं कथितमित्यर्थः ।

*अयमिति*—अयं सुपरिरक्षितः वारिसंभवः मया सीतया ते तुभ्यं निर्यातितः दत्तः श्रीमान् मणिः अस्मै रामाय प्रदातव्यः ।

*जीवितमिति*—मासादूर्ध्वं न जीवेयं सीता मामित्यब्रवीत् ।

*एवमिति*—हनुमता एवं पूर्वोक्तप्रकारेण उक्तमणिं दृष्ट्वा शोककर्शितः रामः सुग्रीवम् इदं वक्ष्यमाणम् अब्रवीत् ।

*अयमिति*—अयं मणिः तस्याः सीताया मूर्ध्नि शोभते । अतः अस्य मणेर्दर्शनेन तां सीतां प्राप्तामिव चिन्तये मन्ये ।

*चिरमिति*—यदि मासं धरिष्यति प्राणान् इति शेषः तदा वैदेही चिरं जीवति । अहं तु तां सीतां विना क्षणमपि न जीवेयं जीवितुमिच्छामि ।

*नयेति*—प्रवृत्तिं वृत्तान्तमुपलभ्य ज्ञात्वा क्षणमपि न तिष्ठेयम् अतः यत्र मम प्रिया दृष्टा तं देशं मामपि नय ।

मधुरा मधुरालापा किमाह मम भामिनी।
मद्विहीना वरारोहा हनुमन् कथयस्व मे॥ १९५॥
एवमुक्तस्तु हनुमान् राघवेण महात्मना।
सीताया भाषितं सर्वं न्यवेदयत राघवे॥ १९६॥
हनुमन् सिंहसंकाशौ तावुभौ रामलक्ष्मणौ।
सुग्रीवं च सहामात्यं सर्वान् ब्रूया ह्यनामयम्॥ १९७॥
यथा च स महाबाहुर्मां तारयति राघवः।
अस्माद्दुःखाम्बुसंरोधात् त्वं समाधातुमर्हसि॥ १९८॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम्।
निशम्याहं ततः शेषं वाक्यमुत्तरमब्रवम्॥ १९९॥
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ।
त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः॥ २००॥
अरिघ्नं सिंहसंकाशं क्षिप्रं द्रक्ष्यसि राघवम्।
लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम्॥ २०१॥
निवृत्तवनवासं च त्वया सार्धमरिन्दमम्।
अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम्॥ २०२॥

---

*मधुरेति*—मम भामिनी प्रिया किमाह कथं च जीवति तत् कथयस्व।

*एवमिति*—रावणेन एवमुक्तो हनुमान् सीतायाः सर्वं भाषितं राघवे तत्समीपे न्यवेदयत।

*हनुमन्निति*—सिंहसंकाशौ सदृशौ रामलक्ष्मणौ सुग्रीवं सर्वान् अन्यांश्च अनामयं ब्रूयाः वदेः।

*यथेति*—दुःखाम्बुसंरोधात् दुःखसागरात् यथा स राघवः मां तारयति तथा त्वं समाधातुमर्हसि।

*तदर्थेति*—अहम् अर्थोपहितं तद्वाक्यं निशम्य श्रुत्वा शेषं स्थिरं उत्तरं वाक्यम् अब्रुवम्।

*ममेति*—मम पृष्ठगतौ पृष्ठारूढौ तौ रामलक्ष्मणौ उदितौ चन्द्रसूर्यौ इव त्वत्सकाशम् आगमिष्यतः।

*अरिघ्नमिति*—सिंहसंकाशं रामं धनुष्पाणिं लक्ष्मणं च क्षिप्रं शीघ्रं द्रक्ष्यसि।

*निवृत्तेति*—त्वया सार्धमभिषिक्तं राघवमयोध्यायां क्षिप्रं द्रक्ष्यसि।

इति श्रीवाल्मीकिरामायणे सुन्दरकाण्डं रामायणशिरोमणि-

टीकासमेतं समाप्तम्॥

---

# श्रीमद्भगवद्गीतोपदेशः

## अर्जुन-विषादः

*धृतराष्ट्र उवाच—*

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।**
**मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १–१ ॥**

धर्मप्रधानत्वाद्धर्मप्रदत्वाद्वा धर्मक्षयात्त्रायत इति वा धर्मक्षेत्रं तस्मिन्धर्मक्षेत्रे वासमात्रेण धर्मतत्फलप्रदे कुरुक्षेत्रे युयुत्सवो युद्धं चिकीर्षवोऽतएव समवेताः समवायं प्राप्ताः सन्नद्धाः मामकाः दुर्योधनादयः पाण्डवाश्च किं कार्यं कृतवन्तः सञ्जय, तद्ब्रूहीत्यर्थः।

*सञ्जय उवाच—*

**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः।**
**प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ १–२० ॥**
**हृषीकेशं तदा वाक्यमिदमाह महीपते।**

अथोभयसेनयोः युद्धसन्नाहसमनन्तरं पाण्डोरपत्यं पाण्डवः कपिध्वजोऽर्जुनः व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा स्वयमपि धनुरुद्यम्य शस्त्राणां सम्पाते प्रयोगकाले प्राप्ते तदा हृषीकेशमिदं वक्ष्यमाणं वाक्यमाह हे महीपते।

*अर्जुन उवाच—*

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ १–२१ ॥**
**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्।**
**कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ १–२२ ॥**

योद्धुकामान् युयुत्सून् अतएवावस्थितान्सेनां सन्नह्य युद्धायोद्युक्तानेतान् योधान् सर्वान् यावत् यावति देशे स्थित्वाहं निरीक्षे सम्यक् पश्यामि हे अच्युत ! तावन्तं देशं मे रथं नीत्वा सेनयोरुभयोर्मध्ये स्थापय। किमिह सेनां द्रष्टुमागतोऽसि वा त्वमित्यत आह—कैरिति। अस्मिन् रणसमुद्यमे युद्धव्यापारे कैः सह मया योद्धव्यं युद्धं कर्तव्यं भवति।

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः।
धार्तराष्ट्रस्य दुर्बुद्धेः युद्धे प्रियचिकीर्षवः ॥ १–२३ ॥

दुर्बुद्धेरधर्मनिष्ठस्य धार्तराष्ट्रस्य धृतराष्ट्रापत्यस्य दुर्योधनस्य युद्धे प्रियचिकीर्षवः युद्धेनेष्टमर्थं सम्पादयितुकामाः संतोऽत्र कुरुक्षेत्रे ये वा एते समागतास्तान् योत्स्यमानान् सर्वानहमवेक्षे नाम रूपं कुलं च संबन्धं यथा ज्ञास्ये तथा रथं स्थापयेत्यर्थः।

*सञ्जय उवाच—*

एवमुक्तो हृषीकेशो गुडाकेशेन भारत।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ १–२४ ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ १–२५ ॥

*गुडाकेशः*—गुडवन्मधुरः सन् भक्तानकति प्राप्नोतीति गुडाकः शिवः। 'स्वादुष्किलायं मधुमानुतायम्' इति श्रुतेः। स शिव ईशो यस्य स गुडाकेशोऽर्जुनस्तेन,हृषीकेशः-हृषीकाणामिन्द्रियाणामीशो हृषीकेशः श्रीकृष्णः एवमुक्तः सन् रथोत्तमं रथिकसारथिभ्यामश्वविशेषैर्ध्वजप्रभावेन चोत्कृष्टत्वेन तद्रथस्योत्तमत्वम्। तं रथोत्तमं सेनयोरुभयोर्मध्ये स्थापयित्वा, भीष्मद्रोणप्रमुखतः षष्ठी बहुवचनान्तस्तसि भीष्मद्रोणौ प्रमुखमादिर्येषां ते भीष्मद्रोणप्रमुखाः महीक्षितः छत्रिन्यायेनात्र भीष्मस्यैव महीक्षित्त्वं तेषां भीष्मद्रोणप्रमुखानां महीक्षितां भूभुजां सर्वेषां शृण्वतामितिशेषः। हे पार्थ, समवेतान्समवायं प्राप्तानेतान्कुरून्पश्येत्युवाच।

तत्रापश्यत् स्थितान्पार्थः पितॄनथ पितामहान्।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ १–२६ ॥
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि।

*अथ भगवदुक्तेरनन्तरं पार्थः*—पृथा-कुन्ती तदपत्यं पार्थोऽर्जुनो यत्र रथः स्थापितस्तत्र स्थित्वा सेनयोरुभयोरपि स्थितान् पितॄन् पितृव्यान्, सखीन् सवयस्काः सखायस्तान्, श्वशुरान् सुहृदो मित्राणि चैवं सर्वानपि स्वीयानेवापश्यत। नतु तदतिरिक्तानित्यर्थः।

तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ॥ १–२७ ॥
कृपया परयाविष्टो विषीदन्निदमब्रवीत्।

स दर्शनकर्मणि प्रवृत्तः कौन्तेयः कुन्त्या अपत्यं कौन्तेयोऽर्जुनः बन्धून् बन्धुत्वधर्मविशिष्टानेव तानवस्थितान् युद्धसन्नद्धान् सर्वान् समीक्ष्य ग्रीवामुन्नम्य सम्यग्दृष्ट्वा तेषु परया कृपयाविष्टो भूत्वा विषीदन्निदं वक्ष्यमाणलक्षणं वचनमब्रवीत्।

*अर्जुन उवाच—*

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ १-२८ ॥**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।**
**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ १-२६ ॥**

युयुत्सुं सेनां सन्नह्य युयुत्सया समुपस्थितमिमं पुरःस्थं स्वजनं पितृपुत्रादिकं दृष्ट्वा मदीया इति ज्ञात्वा, हे कृष्ण, इमं हन्तुं मम गात्राणि करचरणादयः सीदन्ति शिथिलायन्ते, मुखं च परिशुष्यति शुष्कीभवति, शरीरे वेपथुः कम्पो रोमहर्षोभयसन्तापाभ्यां रोमोद्गमश्च जायते ॥

**गाण्डीवं स्रंसते हस्तात् त्वक्चैव परिदह्यते ।**
**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ १-३० ॥**

हस्ताद् गाण्डीवं धनु स्रंसते गलति त्वक् चर्म च परितापेन दह्यते, मे मनोऽपि च भ्रमति परवशं गच्छति । अत एव रथे स्थातुं च न शक्नोमि।

**निमित्तानि च पश्यामि विपरीतानि केशव ।**
**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ १-३१ ॥**

हे केशव, युद्धप्रवृत्तेरनर्थत्वसूचकानि विपरीतान्येव निमित्तानि च पश्यामि न त्वनुकूलानि । इदानीमेवमस्तु तथापि पश्चात्तु श्रेयो भविष्यतीत्यतआह—नचेति । इमं पितृपितामहादिकं स्वजनमाहवे युद्धे हत्वा अनु-पश्चाद् युद्धानन्तरभावि न किमपि श्रेयश्च पश्यामि । एतेषां वधेन न कमपि पुरुषार्थमेष्यन्तं विजान इत्यर्थः ।

**न काङ्क्षे विजयं कृष्ण, न च राज्यं सुखानि च ।**
**किं नो राज्येन गोविन्द, किं भोगैर्जीवितेन वा ॥ १-३२ ॥**

अस्त्येवैतेषां वधेन जयादिलक्षणं श्रेय इत्यत आह—न काङ्क्ष इति । स्वजनहिंसया प्राप्तो यो जयस्तमहं न काङ्क्षे, तेन प्राप्तं राज्यं च तन्मूलकानि विषयसुखान्यपि नाहं काङ्क्ष इत्यर्थः । एतैर्यथा राज्याद्यपेक्षया युध्यते तथा भवद्भिरपि युध्यतामित्यत आह—किमिति । धर्माधर्मविवेकवता नोऽस्माकं स्वजन-हिंसया प्राप्तेन राज्येन किं फलं तन्मूलकैर्भोगैर्वा किं तदर्थकेन जीवितेन वा किम् । अधर्ममूलकं दोषावहमेतत्सर्वं सतां नाशास्यमित्यर्थः ।

**येषामर्थे काङ्क्षितं नो राज्यं भोगा सुखानि च ।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ १-३३ ॥**

अकार्यशतेनापि पोषणीयानां येषां पितृपुत्रादीनामर्थे निमित्ते राज्यं, भोगाः सुखानि च काङ्क्षितं नोऽस्माभिः काङ्क्षितानि भवन्ति । न इति तृतीयार्थे षष्ठी । त

एव पित्रादय इमे प्राणान् धनानि च त्यक्त्वा युद्धे युद्धनिमित्तमवस्थिताः। जीविताशां त्यक्त्वा युद्धे मर्तुमागत्य तिष्ठन्तीत्यर्थः। on killing

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन।**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ १–३५ ॥** पृथ्वी

खड्गैर्मा घ्नतोऽपि हिंसतोऽप्येतानाचार्यादीन् हन्तुं नेच्छामि, त्रैलोक्यराज्यस्य हेतोरपि निमित्ताय वा। एतेषां हतेनेन्द्रत्त्वं वाप्यागच्छतु तथाप्येतान् हन्तुं नेच्छामि किं नु महीकृते किं वक्तव्यं राज्यार्थमेतान् हन्तुं नेच्छामीति। अनेन स्वर्गसुखमपि मास्त्वित्युक्तं भवति।

*सञ्जय उवाच—* battle field

**एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत्।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ –४७ ॥**

अर्जुनः संख्ये सति एवं उक्तप्रकारकं वचनमुक्त्वा शोकसंविग्नमानसः स्वजनविनाशं निमित्तीकृत्य समुत्पन्नेन शोकेन संविग्नं मानसं यस्य स तथोक्तः सन् सशरं चापं विसृज्य नाहं योद्धुं शक्ष्यामीति रथोपस्थे रथस्योपरि उपाविशद् उपविष्टवानित्यर्थः।

# श्रीकृष्णोपदेशः

*सञ्जय उवाच—*

**तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम्।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ २–१ ॥**

*तथा*—उक्त रीत्या मदीया एते भ्रातृपुत्रादयो युधि म्रियन्त इति मरिष्यमाणस्वजनेषु कृपयाविष्टमतएव विषीदन्तमतएवाश्रुपूर्णाकुलेक्षणां तमर्जुनं दृष्ट्वा मधुसूदनः मध्वा-सर्वेषां देहे मधुवदिष्टत्वान्मधुरहङ्कारस्तमात्मप्रकाशनेन सूदयतीति मधुसूदनः। यद्वा 'इयं पृथिवी सर्वेषां भूतानां मधु' इति श्रवणान्मधुः स्वरूपानन्दस्तं स्वापरोक्षवतां सूदयति स्फोरयतीति मधुसूदनः श्रीकृष्णः इदं वक्ष्यमाणलक्षणं वाक्यमुवाच।

*श्रीभगवानुवाच—* मोह

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २–२ ॥**

हे अर्जुन शुद्धस्वभाव, विषमे सङ्कटे शत्रुभिः शस्त्रैर्हन्तुं प्रवृत्तसमये इदं कश्मलं 'एतान्न हन्तुमिच्छामि'इत्याद्युक्तलक्षणश्चित्तव्यामोहः कुतः कस्माद्धेतोस्त्वा त्वां समुपस्थितम् प्राप्तम्। कालदोषात्कर्मदोषाद्वा कस्मादयं भ्रमः शुद्धस्वभावस्य विवेकिनस्तव प्राप्त इत्यर्थः। हे पार्थ, अनार्यजुष्टमनार्यैरार्यशिक्षावर्जितैः पामरैर्जुष्टं सेवितमस्वर्ग्यं स्वर्गाप्रापकं दुर्गतिकारणमिहलोकेऽप्यकीर्तिकरम्।

**क्लैब्यं मास्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ २-३ ॥**

क्लैब्यं क्लीबभावं कातर्यं शूराणामनर्हं त्वं मा स्म गमः मा भजस्व । राजधर्मज्ञे रणपण्डिते त्वयि नैतदुपपद्यते । वीरतमस्तुल्यस्य तव नैतद्युक्तमित्यर्थः । हे परन्तप शत्रुकर्षण, क्षुद्रं क्षुद्रत्वकारणं निकृष्टत्वापादकं हृदयदौर्बल्यमधैर्यं मनः कालुष्यमेतत्त्यक्त्वोत्तिष्ठ । युद्धाय सन्नद्धो भवेत्यर्थः ।

*नित्य आत्मा इति*

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ २-११ ॥**

न शोच्या अशोच्या भीष्मद्रोणादयः, सद्वृत्तत्वात्, परमार्थस्वरूपेण च नित्यत्वात् । तान् अशोच्यान् अन्वशोचः अनुशोचितवान् असि 'ते म्रियन्ते मन्निमित्तं, अहं तैः विनाभूतः किं करिष्यामि राज्यसुखादिना ?' इति त्वं प्रज्ञावतां बुद्धिमतां वादान् वचनानि च भाषसे । तदेतत् मौढ्यं पाण्डित्यं च विरुद्धं आत्मनि दर्शयसि उन्मत्त इव इति अभिप्रायः । यस्मात् गतासून् गतप्राणान् मृतान्, अगतासून् अगतप्राणान जीवतः च न अनुशोचन्ति । पण्डिताः आत्मज्ञाः । पण्डा आत्मविषया बुद्धिः येषां ते हि पण्डिताः । परमार्थतस्तु तान् नित्यान् अशोच्यान् अनुशोचसि, अतो मूढोऽसि इति अभिप्रायः ।

**नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ २-१२ ॥**

न तु एव जातु कदाचित् अहं नासम्, किन्तु आसमेव । अतीतेषु देहोत्पत्तिविनाशेषु घटादिषु वियदिव नित्य एव अहं आसं इति अभिप्रायः । तथा न त्वं नासीः किन्तु आसीरेव । तथा न इमे जनाधिपाः न आसन्, किन्तु आसन्नेव । तथा न च एव न भविष्यामः, किंतु भविष्याम एव सर्वे वयं अतः अस्मात् देहविनाशात् परं उत्तरकालेऽपि । त्रिष्वपि कालेषु नित्या आत्मस्वरूपेन इत्यर्थः । देहभेदानुवृत्त्या बहुवचनम. न आत्मभेदाभिप्रायेण ।

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति ॥ २-१३ ॥**

देहः अस्य अस्तीति देही तस्य देहिनो देहवतः आत्मनः अस्मिन्वर्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था यौवनं यूनो भावो मध्यमावस्था, जरा वयोहानिः जीर्णावस्था, इत्येताः तिस्रः अवस्थाः अन्योन्यविलक्षणाः । तासां प्रथमावस्थानाशे न नाशः, द्वितीयावस्थोपजने न उपजनं आत्मनः । किं तर्हि ? अवि-

क्रियस्यैव एकस्य द्वितीयतृतीयावस्थाप्राप्तिः आत्मनो दृष्टा । तथा तद्वदेव देहान् अन्यो देहो देहान्तरं, तस्य प्राप्तिः अविक्रियस्यैव आत्मन इत्यर्थः। धीरो धीमान् तत्र एवं सति, न मुह्यति न मोहम् आपद्यते ।

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ २–१७ ॥**

अविनाशि न विनष्टुं शीलं अस्येति । तु शब्दः असतो विशेषणार्थः। तत् विद्धि विजानीहि । किम् ? येन सर्वं इदं जगत् ततं व्याप्तं सदाख्येन ब्रह्मणा साकाशं, आकाशेनेव घटादयः । विनाशं अदर्शनं अभावम् । अव्ययस्य न व्येति उपचयापचयौ न याति इति अव्ययं, तस्य अव्ययस्य । न एतत् सदाख्यं ब्रह्म स्वेन रूपेण व्येति, व्यभिचरति निरवयवत्वात । अतः अव्ययस्य अस्य ब्रह्मणः विनाशं न कश्चित्कर्तुं अर्हति, न कश्चित् आत्मानं विनाशयितुं शक्नोति ईश्वरोऽपि। आत्मा हि ब्रह्म, स्वात्मनि च क्रियाविरोधात् ।

**न जायते म्रियते वा कदाचित्**
**नायं भूत्वाऽभविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमाने शरीरे ॥ २–२० ॥**

वाशब्दः चार्थे। कदाचित् शब्दः सर्वविक्रियाप्रतिषेधैः सम्बद्ध्यते न कदाचित् जायते उत्पद्यते तथा न कदाचित् म्रियते वा न म्रियते च । यस्मात् अयं आत्मा भूत्वा भवनक्रियां अनुभूय पश्चात् अभविता अभावं गन्ता न भूयः पुनः, तस्मात् न म्रियते। यो हि भूत्वा न भविता स म्रियते इत्युच्यते लोके। वा शब्दात् न शब्दाच्च अयं आत्मा अभूत्वा वा भविता देहवत् न भूयः पुनः । तस्मात् न जायते यो हि अभूत्वा भविता स जायते इति उच्यते। नैवं आत्मा। अतो न जायते। यस्मात् एवं तस्मात् अजः । यस्मात् न म्रियते तस्मात् नित्यः च । शश्वद्भवः शाश्वतः । न अपक्षीयते स्वरूपेण निरवयवत्वात्। निर्गुणत्वाच्च नापि गुणक्षयेण अपक्षयः। पुराणः– यो हि अवयवागमेन उपचीयते संवर्धते, अभिनव इति च उच्यते । अयं तु आत्मा निरवयवत्वात् पुरापि नव एवेति पुराणः, न वर्धते इत्यर्थः ।

*तथा*—न हन्यते । हन्तिः अत्र विपरिणामार्थे द्रष्टव्यः अपुनरुक्तायै । न विपरिणम्यते इत्यर्थः । हन्यमाने विपरिणम्यमानेऽपि शरीरे ॥ अस्मिन् मन्त्रे षड् भावविकाराः लौकिकवस्तुविक्रिया आत्मनि प्रतिषिद्ध्यन्ते सर्वप्रकारविक्रियारहितः आत्मा इति वाक्यार्थः ।



इति—स्तुत्यभिप्रायेण । तस्मात्परमार्थदर्शिनैव अदेहभृता देहात्मभावरहितेन अशेष-कर्मसंन्यासः शक्यते कर्तुम् ।

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १८–१३ ॥**

पञ्च एतानि वक्ष्यमाणानि हे महाबाहो ! कारणानि निर्वर्तकानि निबोध मे इति उत्तरत्र चेतःसमाधानार्थं, वस्तु वैषम्यप्रदर्शनार्थं च । तानि च कारणानि ज्ञातव्यतया स्तौति—सांख्ये, ज्ञातव्याः पदार्थाः संख्यायन्ते यस्मिन् शास्त्रे तत् सांख्यं-वेदान्तः कृतान्ते इति तस्यैव विशेषणम्—कृतं इति कर्म उच्यते तस्य अन्तः परिसमाप्तिः यत्र सः कृतान्तः कर्मान्तः इत्येतत् । अतः तस्मिन आत्मज्ञानार्थे सांख्ये कृतान्ते वेदान्ते प्रोक्तानि कथितानि सिद्धये निष्पत्त्यर्थं सर्वकर्मणाम् ।

कानि तानीति ? उच्यते—

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक् चेष्टाः दैवं चैवात्र पञ्चमम् ॥ १८–१४ ॥**

अधिष्ठानं इच्छाद्वेषसुखदुःखज्ञानादीनां अभिव्यक्तिः आश्रयः अधिष्ठानं शरीरं, तथा कर्ता उपाधिलक्षणः भोक्ता, करणं च श्रोत्रादि शब्दाद्युपलब्धये पृथग्विधं नाना-प्रकारं तत् द्वादश-संख्यं, विविधाश्च पृथक्चेष्टाः वायवीयाः प्राणापानाद्याः, दैवं चैव दैवमेव च अत्र एतेषु चतुर्षु पंचमं पञ्चानां पूरणं आदित्यादि चक्षुराद्यनुग्राहकम् ।

**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ १८–३६ ॥**

सुखं तु इदानीं त्रिविधं शृणु—समाधानं कुरु इत्येतत् मे मम भरतर्षभ ! अभ्यासात् परिचयात् आवृत्तेः रमते रतिं प्रतिपद्यते यत्र यस्मिन् सुखानुभवे दुःखान्तं च दुःखावसानं दुःखोपशमं च निगच्छति निश्चयेन प्राप्नोति ।

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ १८–३७ ॥**

यत् तत् सुखं अग्रे पूर्वं प्रथमसन्निपाते ज्ञानवैराग्यध्यानसमाध्यारम्भे अत्यन्तायासपूर्वकत्वात् विषमिव दुःखात्मकं भवति, परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखं अमृतोपमं, तत् सुखं सात्त्विकं प्रोक्तं विद्वद्भिः आत्मनः बुद्धिः आत्मबुद्धिः, आत्मबुद्धेः प्रसादः नैर्मल्यं सलिलस्य इव स्वच्छता, ततः जातं आत्मबुद्धिप्रसादजम् आत्मविषया वा आत्मावलम्बना बुद्धिः आत्मबुद्धिः तत्प्रसादप्रकर्षाद्वा जातमित्येतत् । तस्मात् सात्त्विकं तत् ॥

**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ १८–३८ ॥**

विषयेन्द्रियसंयोगात् जायते यत्सुखं तत् सुखं अग्रे प्रथमक्षणे अमृतोपमं अमृतसमं, परिणामे विषमिव, बलवीर्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वात् अधर्म-तज्जनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगपरिणामान्ते विषमिव, तत्सुखं राजसं स्मृतम् ॥

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्राऽऽलस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ १८–३९ ॥**

यत् अग्रे च अनुबन्धे च अवसानोत्तरकाले च सुखं मोहनं मोहकरं आत्मनः निद्रालस्यप्रमादोत्थं—निद्रा च आलस्यं च प्रमादश्च तेभ्यः समुत्तिष्ठति निद्रालस्य-प्रमादोत्थं, तत् तामसं उदाहृतम् ॥

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ १८–४० ॥**

न तत् अस्ति तत् नास्ति पृथिव्यां वा मनुष्यादिषु सत्त्वं प्राणिजातं, अन्यद्वा अप्राणि, दिवि देवेषु वा पुनः सत्त्वं, प्रकृतिजैः प्रकृतितः जातैः एभिः त्रिभिः गुणैः सत्त्वादिभिः मुक्तं परित्यक्तं यत् स्यात् भवेत्–'न तत् अस्ति' इति पूर्वेण सम्बन्धः ।

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ १८–५८ ॥**

मच्चित्तः सर्वदुर्गाणि सर्वाणि दुस्तराणि संसारहेतुजातानि मत्प्रसादात् तरिष्यसि अतिक्रमिष्यसि । अथ चेत् यदि त्वं मदुक्तं अहङ्कारात् 'पण्डितः अहं' इति न श्रोष्यसि न ग्रहीष्यसि, ततः त्वं विनङ्क्ष्यसि विनाशं गमिष्यसि ।

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ १८–६१ ॥**

ईश्वरः ईशनशीलः नारायणः सर्वभूतानां सर्वप्राणिनां हृद्देशे हृदयदेशे हे अर्जुन शुक्लान्तरात्मस्वभाव ! विशुद्धान्तःकरणं, तिष्ठति स्थितिं लभते । तेषु सः कथं तिष्ठतीति ? आह–भ्रामयन् भ्रमणं कारयन् सर्वभूतानि यन्त्रारूढानि यन्त्राणि आरूढानि अधिष्ठितानि इव–इति इव-शब्दः अत्र द्रष्टव्यः–यथा दारुकृतपुरुषादीनि यन्त्रारूढानि । मायया छद्मना भ्रामयन् तिष्ठति इति सम्बन्धः ।

**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ १८–६२ ॥**

तमेव ईश्वरं शरणं आश्रयं संसारार्तिहरणार्थं गच्छ-आश्रय, सर्वभावेन सर्वात्मना हे भारत ! ततः तत्प्रसादात् ईश्वरानुग्रहात् परां प्रकृष्टां शान्तिं उपरतिं स्थानं च मम विष्णोः परमं पदं प्राप्स्यसि शाश्वतं नित्यम् ।

**इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ १८-६३ ॥**

इति एतत् ते तुभ्यं ज्ञानं आख्यातं कथितं गुह्यात् गोप्यात् गुह्यतरं अतिशयेन गुह्यं रहस्यं इत्यर्थः, मया सर्वज्ञेन ईश्वरेण । विमृश्य विमर्शनं आलोचनं कृत्वा एतत् यथोक्तं शास्त्रं अशेषेण समस्तं यथोक्तं च अर्थजातं यथा इच्छसि तथा कुरु ।

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ १८-६५ ॥**

मन्मना भव—मच्चित्तः भव । मद्भक्तः भव—मद्भक्तजनो भव । मद्याजी—मद्यजनशीलो भव । मां नमस्कुरु—नमस्कारं अपि ममैव कुरु । तत्र एवं वर्तमानः वासुदेवे एव समर्पितसाध्यसाधनप्रयोजनः मामेव एष्यसि आगमिष्यसि । सत्यं ते तव प्रतिजाने सत्यां प्रतिज्ञां करोमि एतस्मिन् वस्तुनि इत्यर्थः, यतः प्रियः असि मे ॥

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ १८-६६ ॥**

सर्वधर्मान् सर्वे च ते धर्माश्च तान्—धर्मशब्देन अत्र अधर्मोऽपि गृह्यते, नैष्कर्म्यस्य विवक्षितत्वात्, सर्वधर्मान्—परित्यज्य संन्यस्य सर्वकर्माणि इत्येतत् । मां एकं सर्वात्मानं समं सर्वभूतस्थितं ईश्वरं 'अहमेव' इत्येव शरणं व्रज, न मत्तः अन्यत् अस्ति इति अवधारय इत्यर्थः । अहं त्वा त्वां एवंनिश्चितबुद्धिं सर्वपापेभ्यः सर्वधर्माधर्मबन्धनरूपेभ्यः मोक्षयिष्यामि स्वात्मभावप्रकाशीकरणेन, इत्यतः मा शुचः शोकं मा कार्षीः इत्यर्थः ।

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥१८-६७॥**

इदं शास्त्रं ते तव हिताय मया उक्तं संसारविच्छित्तये, अतपस्काय तपोरहिताय न वाच्यं इति व्यवहितेन सम्बध्यते । तपस्विनेऽपि अभक्ताय गुरौ देवे च भक्तिरहिताय कदाचन कस्यांचिदपि अवस्थायां न वाच्यम् । भक्तः तपस्वी अपि सन् अशुश्रूषुः यो भवति तस्मै अपि न वाच्यम् । न च यो मां वासुदेवं प्राकृतं मनुष्यं मत्वा अभ्यसूयति आत्मप्रशंसादिदोषाध्यारोपणेन ईश्वरत्वं मम अजानन् न सहते, असावपि अयोग्यः तस्मै अपि न वाच्यम् । भगवति अनसूयायुक्ताय, तपस्विने, भक्ताय, शुश्रूषवे वाच्यं शास्त्रं इति सामर्थ्यात् गम्यते ।

**कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसम्मोहः प्रणष्टस्तेधनञ्जय ॥ १८–७२ ॥**

कच्चित् किं एतत् मया उक्तं श्रुतं श्रवणेन अवधारितं पार्थ ? त्वया एकाग्रेण चेतसा—चित्तेन ? किं वा अप्रमादतः ? कच्चित् अज्ञानसम्मोहः– अज्ञाननिमित्तः सम्मोहः अविविक्तभावः अविवेकः स्वाभाविकः किं प्रणष्टः ? यदर्थं अयं शास्त्रश्रवणायासः तव, मम च उपदेष्टृत्वायासः प्रवृत्तः– ते तव हे धनञ्जय ! ॥

*अर्जुन उवाच–*

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥१८–७३॥**

नष्टः मोहः अज्ञानजः समस्तसंसारानर्थहेतुः, सागर इव दुरुत्तारः स्मृतिश्च–आत्मतत्त्वविषया लब्धा–यस्याः लाभात् सर्वहृदयग्रन्थीनां विप्रमोक्षः–त्वत्प्रसादात् तव प्रसादात् मया त्वत्प्रसादं आश्रितेन अच्युत । अथ इदानीं त्वच्छासने स्थितः अस्मि गतसन्देहः–मुक्तसंशयः । करिष्ये वचनं तव । अहं त्वत्प्रसादात् कृतार्थः, । न मे कर्तव्यं अस्ति इत्यभिप्रायः ॥

*सञ्जय उवाच–*

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ १८–७४ ॥**

इति एवं अहं वासुदेवस्य पार्थस्य च महात्मनः संवाद इमं यथोक्तं अश्रौषं श्रुतवान् अस्मि अद्भुतं अत्यन्तविस्मयकरं, रोमाञ्चकरम् ।

**व्यासप्रसादाच्छ्रुतवानिमं गुह्यतमं परम् ।**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥१८–७५॥**

व्यासप्रसादात् ततः दिव्यचक्षुर्लाभात् श्रुतवान् इमं संवादं गुह्यतमं परं योगं योगार्थत्वात् ग्रन्थोऽपि योगः संवादं इमं योगमेवं वा योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम्, न परम्परया ।

**राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥१८–७६॥**

हे राजन् धृतराष्ट्र ! संस्मृत्य संस्मृत्य प्रतिक्षणं संवादं इमं अद्भुतं केशवार्जुनयोः पुण्यं इमं श्रवणेनापि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ।

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतम् हरेः ।**
**विस्मयो मे महान् राजन् ! हृष्यामि च पुनः पुनः ॥१८–७७॥**

यच्च संस्मृत्य संस्मृत्य रूपं अत्यद्भुतं हरेः विश्वरूपं; विस्मयो मे महान् राजन्! हृष्यामि च पुनः पुनः।

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर्विजयोभूतिर्ध्रुवा नीतिर्मतिर्मम ॥ १८–७८ ॥**

यत्र—यस्मिन् पक्षे योगेश्वरः सर्वयोगानां ईश्वरः—तत्प्रभवत्वात् सर्वयोगबीजस्य—कृष्णः यत्र पार्थः यस्मिन् पक्षे धनुर्धरः गाण्डीवधन्वा. तत्र श्रीः— तस्मिन् पाण्डवानां पक्षे श्रीः विजयः, तत्र वै भूतिः—श्रियो विशेषः विस्तारः धृतिः, ध्रुवा अव्यभिचारिणी नीतिः—नयः, इत्येवं मतिः मम इति।

इति श्रीमद्भगवद्गीतोपदेशः अन्वयार्थदीपनीटीकासहितः समाप्तः।

---

# अथ महाकवि अश्वघोषविरचिते बुद्धचरिते

## सप्तमः सर्गः

वनविहारापदेशेन भार्गवस्याश्रममुपगतः सिद्धार्थश्छन्दकाय स्वाशयं निवेद्य व्याधरूपधारिणा दिवौकसा दत्तं वन्यं वासः परिधायाश्रमाभिमुखं ययाविति आश्रमवर्णनं प्रस्तौति कविः ।

**ततो विसृज्याश्रुमुखं रुदन्तं छन्दं वनच्छन्दतया निरास्थः ।**
**सर्वार्थसिद्धो वपुषाभिभूय तमाश्रमं सिद्ध इव प्रपेदे ॥ १ ॥**

ततः स्वाशयकथनानन्तरम्, रुदन्तं सिद्धार्थस्य राज्यानिःस्पृहत्वं विभाव्य विलपन्तम्, अत एवाश्रुमुखमश्रूणि मुखे यस्य तम्, छन्दं तन्नामकात्म सारथिनं विसृज्य त्यक्त्वा राजधानीं प्रति प्रस्थाप्येतियावत् । वनस्य छन्द आशयः 'अभिप्रायश्छन्द आशयः' इत्यमरः । तस्यभावस्तत्ता तया वनवासाभिप्रायेण । निर्गता सांसारिक पदार्थेभ्य आस्था आसक्तिर्यस्य स मुक्तसंगः । यस्मिञ्जाते राजकुलस्य सर्वेषामर्थानां सिद्धिर्जाता स सर्वार्थसिद्धः सिद्धः अणिमादिसिद्धिसम्पन्न इव वपुषा श्रेष्ठयाकृत्या 'वपुः क्लीवं तनौ शस्ताकृतावपि' इति मेदिनी । तं भार्गवस्याश्रमम् अभिभूय वशीकृत्य प्रपेदे प्राप्तवान् । सर्गेऽस्मिन्प्रायेणोपजाति वृत्तम् विशेषन्तु तत्र तत्र वक्ष्यते ।

**स राजसूनुर्मृगराजगामी मृगाजिरं तन्मृगवत्प्रविष्टः ।**
**लक्ष्मीवियुक्तोऽपि शरीरलक्ष्म्या चक्षूंषि सर्वाश्रमिणां जहार ॥२॥**

मृगाणां राजा मृगराजः सिंहः स इव गच्छतीति मृगराजगामी स राजसुनुः राजपुत्रः सिद्धार्थः तद् गम्यमानम् मृगाजिरं मृगप्राङ्गणां अजिरं प्राङ्गणे वाते इत्यमरः । मृगवत्प्रविष्टः मृग इव निर्भयः सन् प्रविष्टवान् । लक्ष्मीवियुक्तोऽपि राजलक्ष्मीरहितोऽपि सिद्धार्थः शरीरलक्ष्म्या शारीरिकसौन्दर्येण करणेन सर्वेषामाश्रमिणाम आश्रमवासिनां चक्षूंषि नेत्राणि दृष्टिमितिभावः जहार अहरत् चकर्ष वा ।

**स्थिता हि हस्तस्थयुगास्तथैव कौतूहलाच्चक्रधराः सदाराः ।**
**तमिन्द्रकल्पं ददृशुर्न जग्मुर्धुर्या इवार्धावनतैः शिरोभिः ॥ ३ ॥**

हस्तेषु स्थिता युगा हलाद्यङ्गानि योक्त्रादीनि येषाम्। 'युगो रथहलाङ्गे' इति-मेदिनी। क्रियतेऽनेन कार्यमिति चक्रम् किमपि कृषियोग्यसाधनम्। तच्चक्रं धरन्तीति चक्रधराः। दारैः स्त्रीभिः सह वर्तमानाः सदाराः कृषका इति शेषः, भार्या जायाथ पुंभूम्निदाराः' इत्यमरः। कौतूहलात्कौतुकात्। 'कौतूहलं च' इत्यमरः। तथैव स्वस्थानेषु स्थिता हि स्थिता एव। 'हि हेतावववधारणे' इत्यमरः। धुर्या धूर्वहा वृषभा इव 'धूर्वहे धुर्यधौरेय' इत्यमरः। अर्धावनतैः शिरोभिरुपलक्षिताः तमिन्द्रकल्पम् इन्द्रसदृशं तं सिद्धार्थं ददृशुर्दृष्टवन्तः जग्मुर्न गन्तव्यस्थानानि न गताः।

**विप्राश्च गत्वा बहिरिध्महेतोः प्राप्ताः समित्पुष्पपवित्रहस्ताः।**
**तपः प्रधानाः कृतबुद्धयोऽपि तं द्रष्टुमीयुर्न मठानभीयुः ॥ ४ ॥**

च तथा इध्महेतोः समिदर्थम् आश्रमाद्बहिर्गत्वा प्राप्ताः सम्मिलिताः सन्तः, समिधः यज्ञाय इन्धनानि, 'इन्धनं त्वेध इध्ममेधः समित स्त्रियाम्' इत्यमरः। पुष्पाणि, पवित्राणि कुशाश्च 'पवित्रं तु मेध्ये ताम्रे कुशे जले, इति हैमः। हस्तेषु येषाम्, तपः प्रधानं मुख्यं कर्म येषाम्, कृता सम्पादिता बुद्धिर्यैस्ते शास्त्राभ्यासेन विशुद्धभावा अपि विप्रा ऋषयः तं राजपुत्रं द्रष्टुमीयुः द्रष्टुं गताः। मठान् स्वनिवासस्थानानि 'मठश्छात्रादि निलयः। इत्यमरः। नेयुर्न गताः।

**हृष्टाश्च केका मुमुचुर्मयूरा दृष्ट्वाम्बुदं नीलमिवोन्नमन्तः।**
**शष्पाणि हित्वाभिमुखाश्च तस्थुर्मृगाश्चलाक्षा मृगचारिणश्च ॥५॥**

च तथा नीलं नीलवर्णं सजलमितिभावः। अम्बुदं जलदं दृष्ट्वा विलोक्य इव। हृष्टाः प्रसन्ना, उन्नमन्त ऊर्ध्वग्रीवा मयूराः केकिनः केकाः वचांसि 'केका वाणी मयूरस्य, इत्यमरः। मुमुचुस्त्यक्तवन्तः, कृतवन्त इत्यर्थः। च तथा चलाक्षा लोललोचना मृगा हरिणाः, शष्पाणि बालतृणानि 'शष्पं बालतृणं घासः' इत्यमरः हित्वा त्यक्त्वा, अभिमुखास्तस्थुः सम्मुखे स्थिताः। च एवं मृगा इव चरन्तीति मृगचारिणः अन्ये पशवोऽपि तथैव तस्थुः।

**दृष्ट्वा तमिक्ष्वाकुकुलप्रदीपं ज्वलन्तमुद्यन्तमिवांशुमन्तम्।**
**कृतेऽपि दोहे जनितप्रमोदाः प्रसुस्नुवुर्होमदुहश्च गावः ॥ ६ ॥**

अंशवः किरणाः सन्त्यस्येति अंशुमान् सूर्यः 'अंशुमान् भास्करेरवौ इति मेदिनी तमिव उद्यन्तम् उदीयमानम्, ज्वलन्तं भ्राजिष्णुम्, इक्ष्वाकुकुलप्रदीपम् इक्ष्वाकुकुल-प्रकाशकं तं सिद्धार्थं दृष्ट्वा जनितप्रमोदा उत्पन्नहर्षातिरेका अत्यर्थं प्रसन्नाः होमाय यज्ञाय दुह्यन्त इति होमदुहः गावः यज्ञधेनवः दोहे कृतेऽपि दोहनक्रियायां जातायामपि प्रसुस्नुवुः प्रस्नुतवत्यः प्रसादाधिक्येन दुग्धं मुमुचुः।

**कच्चिद्वसूनामयमष्टमः स्यात्स्यादश्विनोरन्यतरश्च्युतो वा ।**
**उच्चैरुच्चैरिति तत्र वाचस्तद्दर्शनाद्विस्मयजा मुनीनाम् ॥ ७ ॥**

कच्चिद् इष्टप्रश्ने 'कच्चित्काम प्रवेदने । इत्यमरः । कश्चित् कदाचिद् अयं एष राजपुत्रः, वसूनां गणदेवताविशेषाणाम् 'आदित्य-विश्व-वसवस्तुषिताभास्वरानिलाः, महाराजिकसाध्याश्च रुद्राश्च गणदेवताः, इत्यमरः अष्टमो वसुः प्रभासाख्यः स्याद् भवेत् । वा अथवा अश्विनोः अश्विनीकुमारसंज्ञकदेवयोः अन्यतर एकतरः च्युतः पदभ्रष्टः अत्र पतितो वा भवेत् तत् तस्य सिद्धार्थस्य दर्शनाद् यो विस्मयः आश्चर्यस्तस्माज्जाता उत्पन्ना इति पूर्वार्द्धोक्ता मुनीनां वाचस्तत्र आश्रमे उच्चैः उच्चस्वरेण उच्चेरुः उच्चारणं गताः । इन्द्रवज्रा वृत्तम् ।

**लेखर्षभस्येव वपुर्द्वितीयं धामेव लोकस्य चराचरस्य ।**
**स द्योतयामास वनं हि कृत्स्नं यदृच्छया सूर्य इवावतीर्णः ॥ ८ ॥**

लेखेषु देवेषु ऋषभः श्रेष्ठ इन्द्रः 'जिष्णुर्लेखर्षभः शक्रः, इत्यमरः । तस्य द्वितीयमपरं वपुः शरीरमिव, चराचरस्य स्थावरजङ्गमात्मकस्य लोकस्य धामेव तेज इव, 'धाम शक्तौ प्रभावे च तेजो-मन्दिर-जन्मसु' इत्यमरः । यदृच्छयास्वेच्छया अवतीर्णः अध आगतः सूर्य इव स राजपुत्रः हि निश्चयेन कृत्स्नमखिलं वनं तपोवनं द्योतयामास प्रकाशितवान् ।

**ततः स तैराश्रमिभिर्यथावदभ्यर्चितश्चोपनिमन्त्रितश्च ।**
**प्रत्यर्चयां धर्मभृतो बभूव स्वरेण साम्भोऽम्बुधरोपमेन ॥ ९ ॥**

ततः राजपुत्रदर्शनजविस्मयानन्तरम् । तैः उक्तैः आश्रमिभिः आश्रमवासिभिस्तपोधनैः उपनिमन्त्रितः समीपमाहूतः च तथा यथावद यथोचितम् अभ्यर्चितः सत्कृतः स सिद्धार्थः, अम्भसा जलेन सहितो योऽम्बुधरः जलधरः तदुपमेन तत्सदृशेन स्वरेण गभीरया स्निग्धया च वाचा तपोधनानां सत्कारं स्वीकृत्य धर्मभृतः धर्मात्मनः तांस्तपोधनान प्रत्यर्चयां बभूव प्रतिपूजितवान् ।

**कीर्णं तथा पुण्यकृता जनेन स्वर्गाभिकामेन विमोक्षकामः ।**
**तमाश्रमं सोऽनुचचार धीरस्तपांसि चित्राणि निरीक्षमाणः ॥ १० ॥**

विमुक्तिः मोक्षः जन्मजरान्तकादिभ्य इति भावः कामः यस्य, चित्राणि अद्भुतानि 'विस्मयोऽद्भुतमाश्चर्यं चित्रमपि । इत्यमरः । तपांसि कृच्छ्रचान्द्रायणादीनि निरीक्षमाणः सम्यक् पश्यन्, धीरः धैर्यवान् स राजपुत्रः स्वर्गाय अभिवृद्धः कामः इच्छा यस्य तेन स्वर्गं गन्तुकामेन पुण्यं करोतीति पुण्यकृत् तेन तपः कुर्वता जनेन तपस्विवर्गेण 'जातावेकवचनमित्येकवचनम् । कीर्णं व्याप्तं तमाश्रममनुचचार तैराश्रमवासिभिः सहचचार । 'अनु हीने सहार्थे च' इति विश्वः ।

**तपोविकारांश्च निरीक्ष्य सौम्यस्तपोवने तत्र तपोधनानाम् ।**
**तपस्विनं कंचिदनुव्रजन्तं तत्त्वं बिजिज्ञासुरिदं बभाषे ॥ ११ ॥**

तत्र तपोवने तस्मिन्नाश्रमे तपोधनानां तपस्विनां तपोविकारान् तपसः परिणामान 'परिणामो विकारो द्वे' इत्यमरः। निरीक्ष्य सम्यग् विलोक्य सौम्यः साधुः सिद्धार्थः तत्त्वं सत्यं परमात्मानं वा 'तत्त्वं परमात्मनि। वाद्यभेदे स्वरूपे च' इति हैमः। विजिज्ञासु: विशेषेण ज्ञातुमिच्छुः कंचित्कमपि अनुव्रजन्तम् अनुगच्छन्तं तपस्विनं बभाषे उक्तवान् पृष्टवानितिभावः।

**तत्पूर्वमद्याश्रमदर्शनं मे यस्मादिमं धर्मविधिं न जाने।**
**तस्माद्भवानर्हति भाषितुं मे यो निश्चयो यत्प्रति वः प्रवृत्तः ॥१२॥**

तद् आश्रमदर्शनं मे मम अद्य पूर्वं प्रथमवारं जातमितिशेषः। यस्मात् यतः कारणाद्, इमं धर्मविधिं धर्मानुष्ठानं न जाने नहि जानामि। तस्माद्. वः युष्माकं यः निश्चयः विश्वासः सिद्धान्तो वास्ति स निश्चयो यत्प्रति यदर्थं प्रवृत्तः प्रारब्धः ( तत्सर्वं ) भवान् मे मह्यं भाषितुं कथयितुमर्हति योग्योऽधिकारी वर्तते। इन्द्रवज्रा वृत्तम्।

**ततो द्विजातिः स तपोविहारः शाक्यर्षभायार्षभ विक्रमाय।**
**क्रमेण तस्मै कथयांचकार तपोविशेषांस्तपसः फलं च ॥ १३ ॥**

ततः प्रश्नश्रवणानन्तरं स अनुव्रजन्। द्वे जाती जन्मनी यस्य स द्विजन्मा। तथा च मनुः—'मातुरग्रेधि (वि) जननं द्वितीयं मौञ्जिबन्धनात् इति। तपोविहारः तप एव विहारः परिक्रमः क्रीडार्थसञ्चरणमिति भावः। यस्य, स तपस्वी। ऋषभस्य वृषभस्य 'ऋषभो वृषभो वृषभी वृषः, इत्यमरः। इव विक्रमः अतिपराक्रमः कान्तिर्वा यस्य 'विक्रमस्त्वतिशक्तिता'। 'क्रान्तौ विक्रमः, इत्यमरः। तस्मै। शक्येषु शाक्यवंशयेषु ऋषभाय श्रेष्ठाय 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः। सिंहशार्दूल नागाद्याः पुंसि श्रेष्ठार्थगोचराः. इत्यमरः। सिद्धार्थाय क्रमेण तपोविशेषान् तपसो–भेदान् तपसः फलं च कथयांचकार कथयामास।

**अग्राम्यमन्नं सलिले प्ररूढं पर्णानि तोयं फलमूलमेव।**
**यथागमं वृत्तिरियं मुनीनां भिन्नास्तु ते ते तपसां विकल्पाः ॥१४॥**

ग्रामे भवं ग्राम्यम् 'ग्रामाद्यखञौ। इति यत्प्रत्ययः। न ग्राम्यम् अग्राम्यं वन्यं नीवारश्यामाकादि अन्नम्, सलिले जले प्ररूढमुत्पन्नं किञ्चिद्भोज्यम्, पर्णानि तरुलतादि पर्णानि तरुलतादिपत्राणि, 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः। तोयं पानीयम् 'अम्भोर्णास्तोयं पानीयं' इत्यमरः। फलमूलमेव फलानि मूलानि च एव एतेषु पर्यायेणैकमेवेति भावः मुनीनामियमषोक्ता यथागमं शास्त्रानुसारं यथास्यात्तथा

वृत्तिः जीवनोपायोऽस्तीति शेषः । तपसां कृच्छ्रचान्द्रायणादीनां ते ते विकल्पाः प्रकारा भिन्नास्तु भिन्ना एव सन्तीतिशेषः ।

**उञ्छेन जीवन्ति खगा इवान्ये तृणानि केचिन्मृगवच्चरन्ति ।**
**केचिद्भुजङ्गैःसह वर्तयन्ति वल्मीकभूता वनमारुतेन ॥१५॥**

अन्ये तापसाः खगाः पक्षिणा इव उञ्छेन खलादिपतितधान्यस्य कणश आदानेन जीवन्ति 'उञ्छःकणाश आदानम्' इत्यमरः । केचित् मृगवत् मृगा इव तृणानि घासं चरन्ति भक्षयन्ति । केचिदपरे वल्मीकभूताः पिपीलिकादिनिष्कासित मृत्पुञ्जभूताः, भुजङ्गैः सह सर्पैः सार्धम् वनमारुतेन वन्यवायुना वर्तयन्ति जीवन्ति ।

**अश्मप्रयत्नार्जितवृत्तयोऽन्ये केचित्स्वदन्तापहतान्नभक्षाः ।**
**कृत्वा परार्थं श्रपणं तथान्ये कुर्वन्ति कार्यं यदि शेषमस्ति ॥१६॥**

अन्ये तापसा अश्मनः प्रयत्नेन उपायभूतेन उपार्जिता सम्पादिता वृत्तिः जीवनोपायः यस्तथाभूताः, केचित स्वदन्तः यतु मुशलादिसाधनैः अपहतं तुषेभ्यः पृथक् कृतं कुट्टितं पिष्टं वा अन्नं भक्षयन्तीति तथाविधाः वर्तन्ते इति शेषः । अन्ये केचन परार्थम् अन्येभ्यः नत्वात्मने श्रपणं पाकं कृत्वा यदि तत्र तस्मिन् पाके शेषमस्ति किंचिदवशिष्यते तदा तेनावशिष्टेन कार्यं कुर्वन्ति स्वभोजनादि कार्यं सम्पादयन्तीति भावः । इन्द्रवज्रावृत्तम् ।

**केचिज्जलक्लिन्नजटाकलापा द्विः पावकं जुह्वति मन्त्रपूर्वम् ।**
**मीनैः समं केचिदपो विगाह्य वसन्ति कूर्मोल्लिखितैः शरीरैः ॥१७॥**

जलेन क्लिन्ना आर्द्रा जटानां संश्लिष्टकेशानां कलापाः समूहा येषां तथाभूताः केचित्तापसा मन्त्रपूर्वं मन्त्रानुच्चार्येतिभावः, द्विः द्विवारं प्रातः सायं पावकं जुह्वति यज्ञं कुर्वन्ति इति कलितार्थः । केचिद् अपो जलानि विगाह्य अवगाह्य जले निलीनाः सन्त इति भावः, कूर्माणां कच्छपानां संघर्षेणोल्लिखितैः चिह्नितैः शरीरैरुपलक्षिताः मीनैः मत्स्यैः समं सह वसन्ति ।

**एवंविधैः कालचितैस्तपोभिः परैर्दिवं यान्त्यपरैर्नृलोकम् ।**
**दुःखेन मार्गेण सुखंह्युपैति सुखं हि धर्मस्य वदन्ति मूलम् ॥१८॥**

कालचितैः दीर्घकालसंचितैः एवंविधैः ईदृशैः परैः उत्तमैर्विशेषैस्तपोभिः नियमैः करणैः दिवं स्वर्गं यान्ति इति शेषः, अपरैः साधारणैः तपोभिः नृलोकं नरलोकं मृत्युलोकं यान्ति सम्बध्यते । दुःखेन कष्टकरेण मार्गेण विधिना लोकः सुखं उपैति प्राप्नोति हि यतः सुखं धर्मस्य मूलमस्तीति वदन्ति बुद्धिमन्तः ।

इत्येवमादि द्विपदेन्द्रवत्सः श्रुत्वा वचस्तस्य तपोधनस्य ।
अदृष्टतत्त्वोऽपि न सन्तुतोष शनैरिदं चात्मगतं बभाषे ॥१९॥

तस्य उक्तस्य तपोधनस्य इत्येवमादि इत्यादि वचः वचनं श्रुत्वा न दृष्टं साक्षात्कृतः तत्त्वं परमात्मा सत्यं वा येन तथाभूतोपि स द्विपदानां मनुष्याणाम् इन्द्रः राजा तस्य वत्सः नरेन्द्रपुत्रः न सन्तुतोष सन्तुष्टो नाभूत् । च तथा इदं वक्ष्यमाणम् आत्मगतम् मनसि । शनैः बभाषे उक्तवान् विचारयामासेतिभावः ।

दुःखात्मकं नैकविधं तपश्च स्वर्गप्रधानं तपसः फलंच ।
लोकाश्च सर्वे परिणामवन्तः स्वल्पेश्रमः खल्वयमाश्रमाणाम् ॥२०॥

तपश्च किंच कृच्छ्रचान्द्रायणादि तपोऽनुष्ठानम् न एका विधा प्रकारो यस्य तथाविधमनेकविधं, दुःखात्मकं दुःखप्रदं—चास्तीति शेषः । तपसः फलं च स्वर्ग-प्रधानं मुख्यतया स्वर्ग-प्राप्तिरेवेति भावः । च तथा सर्वे लोकाः परिणामवन्तः विकारिणः 'परिणामो विकारो द्वे । इत्यमरः । परिवर्तनशोलाः सान्ति । 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । इति गीता (८-१६) । (अतः) आश्रमाणामाश्रमवासिनाम् अयं तपोनुष्ठानरूपः श्रमः प्रयत्नः स्वल्पे खलु स्वर्गादिलोकप्राप्तिरूपात्यल्पफलाय एव । इन्द्रवज्राख्यं वृत्तम् ।

प्रियांश्च बन्धून् विषयांश्च हित्वा ये स्वर्गहेतोर्नियमं चरन्ति ।
ते विप्रयुक्ताः खलु गन्तुकामा महत्तरं बन्धनमेव भूयः ॥२१॥

प्रियान् बन्धून् विषयान् रूपरसादींश्च हित्वा त्यक्त्वा ये जनाः स्वर्गहेतोः स्वर्गप्राप्त्यर्थं नियमं चरन्ति तपः कुर्वान्ति ते विप्रलब्धा वञ्चिता भूयः पुनः महत्तरम् अतिमहत् बन्धनं जन्मरूप खलु निश्चयेन गन्तुकामाः गन्तुमिच्छन्ति । 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशान्ति । एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते, इति गीता श्रुतिरपि—'ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ।

काय-क्लमैर्यश्च तपोऽभिधानैः प्रवृत्तिमाकाङ्क्षति कामहेतोः ।
संसारदोषानपरीक्षमाणो दुःखेन सोऽन्विच्छति दुःखमेव ॥ २२ ॥

तपः अभिधानं नाम येषां तैस्तपोनामकैः काय-क्लमैः शरीरपीडनैः, यः नरः कामानां भोगैश्वर्याद्यभिलाषाणां हेतोः कारणात् 'कामः स्मरेच्छयोः पुमान्' इति मेदिनी । प्रवृत्तिं प्रवाहं 'प्रवृत्तिर्वृत्तवृत्तान्त-प्रवाहेषु प्रवर्तने, इति हैमः । जन्मरूपम् आकाङ्क्षति इच्छति स नरः संसारदोषान् संसारसम्बन्धीनि रागद्वेषादिदूषणानि अपरीक्षमाणः न सम्यग् आलोचयन् दुःखेन कायक्लेशेन दुःखमेव जन्म-मरणरूपं दुःखमेव अन्विच्छति मार्गयति । यतः—'भोगैश्वर्य-प्रसक्तानां तयापहृत चेतसाम् । व्यवसायात्मिका

बुद्धिः समाधौ न विधीयते । किञ्च, नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना । न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्' इति भगवद्गीता ।

त्रासश्च नित्यं मरणात्प्रजानां यत्नेन चेच्छन्ति पुनः प्रसूतिम् ।
सत्यां प्रवृत्तौ नियतश्च मृत्युस्तत्रैव मग्ना यत एव भीताः ॥२३॥

च अथ च प्रजानां लोकानां मरणात् मृत्योः नित्यं सर्वदा त्रासः भयं विद्यत इति शेषः । च किंच लोका यत्नेन तपोऽनुष्ठानरूपोपायेन पुनः प्रसूतिं प्रसवं जन्म वा 'प्रसूतिः प्रसवे' इत्यमर । इच्छन्ति । प्रवृत्तौ सत्यां प्रवाहे वर्तमाने मृत्युः नियतः अपरिहार्यः निश्चितः । 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च' इति भगवद्गीता । यतः यस्माद् भीताः त्रस्तास्तत्रैव मग्ना लीना इति महदाश्चर्यम् द्योत्यतेऽत्र । इन्द्रवज्रा वृत्तम् ।

इहार्थमेके प्रविशन्ति खेदं स्वर्गार्थमन्ये श्रममाप्नुवन्ति ।
सुखार्थमाशाकृपणोऽकृतार्थः पतत्यनर्थे खलु जीवलोकः ॥ २४ ॥

एके केचिद् इहार्थे एतस्मै लोकाय खेदं दुःखं कायक्लेशरूपं प्रविशन्ति गच्छन्ति । अन्येऽपरे स्वर्गार्थे स्वर्गप्राप्त्यर्थं श्रमं तपोऽनुष्ठान-प्रयत्नम् आप्नुवन्ति अधिगच्छन्ति । (एवं) आशा-कृपणः आशा दीना हीना वा यस्य स आशादीनः जीवलोकः न कृतः साधितम् अर्थः प्रयोजनं येन स असफलः सन् नास्ति अर्थः प्रयोजनं यस्य तस्मिन् अनर्थे पतति । सुखमन्विच्छन् अनन्तदुःखे पततीत्यनर्थः 'स शान्तिमाप्नोति न कामकामी' 'अन्तवत्त्व तु फलं तेषां तद्भवत्यल्पमेधसाम् । इति च भगवद्गीता ।

न खल्वयं गर्हित एव यत्नो यो हीनमुत्सृज्य विशेषगामी ।
प्राज्ञैः समानेन परिश्रमेण कार्यं तु तद्यत्र पुनर्न कार्यम् ॥२५॥

खलु निश्चयेन अयम् अत्र क्रियमाणः यत्नः तपोनुष्ठानरूपोपायः, यः हीनं निकृष्टम् उत्सृज्य त्यक्त्वा विशेषमसाधारणं स्वर्गादिफलं गन्तुं शीलमस्यास्तीति तथाभूतः गर्हित एव न निन्दितो नैव । तु किन्तु प्राज्ञैः बुद्धिमद्भिः समानेन परापरयोर्भेदं त्यक्त्वा सदृशेन परिश्रमेण प्रयत्नेन तत्कार्यं कर्तुमुचितं यत्र यस्मिन् कृते पुनः न कार्यं कर्तुमवशिष्येत किमपीतिशेषः ।

शरीरपीड़ा तु यदीह धर्मः सुखं शरीरस्य भवत्यधर्मः ।
धर्मेण चाप्नोति सुखं परत्र तस्मादधर्मं फलतीह धर्मः ॥२६॥

यदि पक्षान्तरे 'पक्षान्तरे चेद्यदि च' इत्यमरः । इह अत्रलोके शरीरपीडा चान्द्रायणादिभिः शरीरपीडनं धर्मः । शरीरस्य सुखम् अधर्मः पापं भवति, च तथा

धर्मेण परत्र परलोके सुखं ( नरः ) आप्नोति, लभते, तस्मात् तदा इह अस्मिन् निश्चये सति धर्मः शरीरपीडारूपः अधर्मं परलोके सुख-रूपं फलति जनयति। धर्मोऽधर्मे फलभावेन परिवर्तते इतिभावः ॥ अतोऽयं विचारो न समीचीनः ॥

**यतः शरीरं मनसो वशेन प्रवर्तते चापि निवर्तते च।**
**युक्तो दमश्चेतस एव तस्माच्चित्तादृते काष्ठसमं शरीरम् ॥ २७ ॥**

यतः शरीरं मनसो वशेन मनसः प्रेरणया प्रवर्तते विषयेषु प्रवृत्तिं करोति च तथा निवर्ततेऽपि निवृत्तिमपि गच्छति, तस्माद्धेतोः चेतसः मनसः दमः दमनं वशीकरणमेव युक्तं उचितम् न तु शरीरस्येतिभावः। ( यतः ) चित्तादृते चित्तं विना शरीरं काष्ठसमं शुष्कं निश्चेष्टं चेत्यर्थः ॥ तदुक्तम्—'यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ततस्ततो नियम्यैतदात्मन्येववशंनयेत्। इति गी. (६–२१) 'एवञ्च मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥ इति ॥

**आहारशुद्ध्या यदि पुण्यमिष्टं तस्मान्मृगाणामपि पुण्यमस्ति।**
**ये चापि बाह्याः पुरुषाः फलेभ्यो भाग्यापराधेन पराङ्मुखार्थाः ॥२८॥**

यदि चेद् आहारस्य भोजनस्य शुद्ध्या पवित्रतया शुद्धभोजनकरणेनेतिभावः पुण्यं धर्मप्राप्तिः इष्टम् मता तस्मात् तदा मृगाणामपि हरिणादिपशूनामपि पुण्यमस्ति तेऽपि पुण्यवन्तः पवित्रभोजनकरणात्। अपिच ये साधकाः फलेभ्यो बाह्याः फलाहारमपि त्यक्तवन्तः यत्तदोर्नित्यसम्बन्धात् ते भाग्यापराधेन भाग्यदोषेण दौर्भाग्येन वा पराक् प्रत्यावृत्तं मुखम् अर्थेभ्यो येषां ते उद्देश्यविमुखाः सन्तीति शेषः। इन्द्र वज्राख्यं वृत्तम्।

**दुःखेऽभिसन्धिस्त्वथ पुण्यहेतुः सुखेऽपि कार्यो ननु सोऽभिसन्धिः।**
**अथ प्रमाणं न सुखेऽभिसन्धिर्दुःखे प्रमाणं ननु नाभिसन्धिः ॥२९॥**

अथानन्तरं दुःखे शरीरपीड़ने अभिसन्धिस्तु पक्षपात एव पुण्यहेतुः अथवा 'दुःखं पुण्यवद्' इत्यादिपक्षकथनमेव धर्मकारणम्, ननु निश्चयेन स उक्तः अभिसन्धिः पक्षपातः पक्षकथनंवा सुखेऽपि कार्यः कर्तुमुचितः। अथ चेत् सुखेऽभिसन्धिः प्रमाणं प्रमाणपुष्टं युक्तियुक्तं वा यथास्यात्तथा न तदा दुःखेऽभिसन्धिः प्रमाणं न ननु नैव।

**तथैव ये कर्मविशुद्धिहेतोः स्पृशन्त्यपस्तीर्थमिति प्रवृत्ताः।**
**तत्रापि तोषो हृदि केवलोऽयं न पावयिष्यन्ति हि पापमापः ॥३०॥**

तथैव एवमेव जनाः तीर्थं पवित्रस्थानं विद्यते इत्यनया भावनया प्रवृत्ताः प्रेरिताः कर्मणां विशुद्धिहेतोः विशेषेण पवित्रतासम्पादनाय अपस्तीर्थजलानि स्पृशन्ति पिबन्ति अवगाहन्ते वा तत्रापि एवमाचरणेऽपि हृदि हृदये केवलः अयं तोषः एषैषा

तुष्टिर्यत् कर्मविशुद्धिर्जाता । वस्तुतस्तावदेवं कापि शुद्धिर्न भवति यावन्मनः शुद्धं नास्ति मनसि शुद्धे तु तीर्थेन किम् । तथाच 'शुचि मनो यद्यस्ति तीर्थेन किम् । इति । हि यस्मात् पापं पापिनं पुरुषं दुष्कर्म वा आपो जलानि न पावयिष्यन्ति पवित्रतां न नेष्यन्ति ।

**स्पृष्टं हि यद्यद्गुणवद्भिरम्भस्तत्तत्पृथिव्यां यदि तीर्थमिष्टम् ।**
**तस्माद्गुणानेव परैमि तीर्थमापस्तु निःसंशयमाप एव ॥३१॥**

यदि चेत् पृथिव्यां यद्यद्हि यद्यदेव अम्भः जलं गुणवद्भिः गुणिभिर्महात्मभिः स्पृष्टं स्पर्शेन पवित्रितं तत्तत् तीर्थमिष्टम् तीर्थं मतम् तस्मात् गुणानेव तीर्थं परैमि गुणा एव उत्तमं तीर्थमिति मन्ये आपस्तु जलानि तु निःसंशयं निःसन्देहम् सामान्यजलानि न तु किञ्चिद्विशिष्टं तत्र विद्यते । इन्द्रवज्रा वृत्तम् ।

**इति स्म तत्तद्बहुयुक्तियुक्तं जगाद चास्तं च ययौ विवस्वान् ।**
**ततो हविर्धूमविवर्णवृक्षं तपःप्रशान्तं स वनं विवेश ॥३२॥**

इति अनेनप्रकारेण तत्तद् दुःख.त्मकमित्याद्येकादशश्लोकेषूक्तं बहुयुक्तियुक्तमनेकतर्कसम्मतं स जगाद स्म उवाच । विवस्वान् सूर्यश्चास्तं ययौ गतः । ततस्तदनन्तरं स सिद्धार्थः । हविषां हवनीयपदार्थानां घृतादीनां धूमेन विरुद्धो वर्णो रागो येषां ते हविर्धूम धूसरितवर्णाः वृक्षाः यत्र, तपसा प्रशान्तमतिशान्तम् वनं तपोवनं विवेश प्राविशत् । उपेन्द्रवज्रा वृत्तम् ।

**अभ्युद्धृतप्रज्वलिताग्निहोत्रं कृताभिषेकर्षिजनावकीर्णम् ।**
**जाप्यस्वनाकूजितदेवकोष्ठं धर्मस्य कर्मान्तमिव प्रवृत्तम् ॥३३॥**

अभितः सर्वतः उद्धृतमुत्क्षिप्तं प्रज्वलितं प्रदीप्तं च अग्निहोत्रं मन्त्रपूर्वकं स्थापिताग्नौ हुतं यत्र, अथवा उद्धृतः प्रदीप्तश्च अग्निहोत्रसम्बन्धी अग्निः यत्र । कृतःअभिषेकः शास्त्रविधिना मन्त्रपूर्वकस्नानं यैस्तैः ऋषिजनैर्मुनिभिरवकीर्णम् व्याप्तम्, जाप्यानां जपयोग्य-मन्त्राणां स्वनेन मधुरध्वनिना आसमन्तात् कूजिताः प्रतिध्वनिपूर्णाः देवानां कोष्ठाः गृहमध्यभागाः 'कोष्ठः कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च' इति मेदिनी । यत्र धर्मस्य सुकृतस्य कर्मान्तमिव कार्यपूर्तिक्षेत्रमिव प्रवृत्तं वनं स विवेशेति पूर्वेण श्लोकेन सम्बन्धः ।

**काश्चिन्निशास्तत्र निशाकराभः परीक्षमाणश्च तपांस्युवास ।**
**सर्वं परिक्षिप्य तपश्च मत्वा तस्मात्तपः क्षेत्रतलाज्जगाम ॥३४॥**

निशाकरस्य चन्द्रस्य आभा कान्तिरिव आभा यस्य स रूपलावण्यसम्पन्नः सर्वार्थसिद्धः तपांसि नियमान् परीक्षमाणः समीक्षमाणः काश्चित् निशा रात्रीः तत्र

तपोवने उवास तस्थौ । सर्वं तपः परिच्चिप्य सर्वविधंतपः बन्धनयुक्तमसारंच मत्वा ज्ञात्वा तस्मात्तपः चेत्रतलात् तपोवनाद् जगाम निर्ययौ । 'परिच्चिप्य' पदस्य प्रकरणानुसारी अर्थः प्रदर्शितः परिच्चिप्येत्ययं पाठो भ्रष्टः प्रतीयते, यतोह्यन्वयसङ्गतिर्न भवति । विशेषन्तु मनीषिभिः स्वयं विचारणीयम् ।

**अन्वव्रजन्नाश्रमिणास्ततस्तं तद्रूपमाहात्म्यगतैर्मनोभिः ।**
**देशादनार्यैरभिभूयमानान्महर्षयो धर्ममिवापयान्तम् ॥३५॥**

अनार्यैः दुष्टैः अभिभूयमानात् पराभवं नीयमानाद् देशाद् अपयान्तं गच्छन् धर्मं महर्षय इव ततः तपोवनान्निर्गमनानन्तरं तत् तस्य रूपस्य प्रशस्ताकृतेः माहात्म्यगतैः प्रशंसांगतैः प्रशंसद्भिः मनोभिरुपलक्षिताः आश्रमिणस्तं सिद्धार्थम् अन्वव्रजन् अनुगतवन्तः ।

**ततो जटावल्कलचीरखेलांस्तपोधनांश्चैव स तान्ददर्श ।**
**तपांसि चैषामनुरुध्यमानस्तस्थौ शिवे श्रीमति वृक्षमूले ॥३६॥**

ततः स सिद्धार्थः जटाः, वल्कलानि, चीराणि च खेला क्रीडा मनोविनोदः वा येषां तान् तपोधनान् एषां तपांसि चैव ददर्श दृष्टवान् । अनुरुध्यमान आश्रमिभिः साग्रहं प्रार्थ्यमानः शिवे शुभे मङ्गलरूपे वा 'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्। इत्यमरः । श्रीमति शोभायुक्ते वृक्षमूले तस्थौ स्थितिं चकार ।

**अथोपसृत्याश्रमवासिनस्तं मनुष्यवर्यं परिवार्य तस्थुः ।**
**वृद्धश्च तेषां बहुमानपूर्वं कलेन साम्ना गिरमित्युवाच ॥३७॥**

अथ वृक्षमूलस्थित्यनन्तरम् आश्रमवासिनः तं मनुष्यवर्यं मनुष्यश्रेष्ठम् उपसृत्य समीपं गत्वा परिवार्य परितः सर्वतः वृत्वा तस्थुः स्थिताः । च तथा तेषां कोऽपि वृद्धस्तपस्वी बहुमानपूर्वम् अतिसम्मानेन साम्ना शान्त्या कलेन मधुरस्वरेण इति वक्ष्यमाणां गिरमुवाच वाचमुक्तवान् ।

**त्वय्यागते पूर्ण इवाश्रमोऽभूत्संपद्यते शून्य इव प्रयाते ।**
**तस्मादिमं नार्हसि तात हातुं जिजीविषोर्देहमिवेष्टमायुः ॥३८॥**

त्वयि सिद्धार्थे आगतेऽत्रप्राप्ते आश्रमः पूर्ण इवाभूत् प्रयाते गते सति त्वयि शून्यः रिक्त इव सम्पद्यते जायते । तस्मात् हे तात, प्रिय, जिजीविषोः जीवितुमिच्छोः इष्टं देहं प्रियं शरीरं आयुः जीवनकाल इव इममाश्रमं हातुं त्यक्तुं नार्हसि उचितं नास्ति।

**ब्रह्मर्षिराजर्षिसुरर्षिजुष्टः पुण्यः समीपं हिमवान् हि शैलः ।**
**तपांसि तान्येव तपोधनानां यत्संनिकर्षाद्बहुलीभवन्ति ॥३९॥**

ब्रह्मर्षिभिः वशिष्ठसदृशैः, राजर्षिभिः विश्वामित्रकल्पैः, सुरर्षिमिः नारदानुरूपैः, जुष्टः सेवितः पुण्यः पूतः हिमवान् हिमालयः शैलः पर्वतः समीपे हि समीपमेव

विद्यते इतिशेषः। यत्संनिकर्षाद् यस्य सामीप्यात् तपोधनानां तान्येव उक्तान्येव तपांसि बहुली भवन्ति बहुलतां प्राप्नुवन्ति।

**तीर्थानि पुण्यान्यभितस्तथैव सोपानभूतानि नभस्तलस्य।**
**जुष्टानि धर्मात्मभिरात्मवद्भिर्देवर्षिभिश्चैव महर्षिभिश्च ॥४०॥**

तथैव एवमेव धर्मात्मभिः आत्मवद्भिः आत्मज्ञानिभिः देवर्षिभिः महर्षिभिः च जुष्टानि सेवितानि, नभस्तलस्य व्योम्नः स्वर्गस्येति यावत् सोपानभूतानि आरोहणमार्गरूपाणि पुण्यानि पवित्राणि तीर्थानि 'हिमालयं' अभितः सर्वतः सन्तीति शेषः। इन्द्रवज्राख्यं वृत्तम।

**इतश्च भूयः क्षममुत्तरैव दिक्सेवितुं धर्मविशेषहेतोः।**
**न तु क्षमं दक्षिणतो बुधेन पदं भवेदेकमपि प्रयातुम् ॥४१॥**

इतश्च अस्मात्स्थानाच्च भूयः पुनः धर्मविशेषहेतोः निवृत्तिफलक-विशेषधर्मानुष्ठानाय उत्तरैव दिक् सेवितुं क्षमम् उत्तर दिशायामेव गमनं युक्तम् 'युक्ते क्षमं शक्ते हिते त्रिषु' इत्यमरः। शुक्ला गतिरेव ग्राह्येति बुधेन बुद्धिमता दक्षिणतः एकपदमपि प्रयातुं क्षमं न तु भवेत्। दक्षिण मार्गेण एकं पदमपि, बुद्धिमता गन्तुं युक्तं नैव भवेत कृष्णागतिः त्याज्येतिभावः। तदुक्तं भगवद्गीतायाम्—शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकयायात्यनावृत्तिमन्ययावर्तते पुनः। एतयोर्द्वयोर्गत्योरेवात्रोल्लेख इति प्रतीयते।

**तपोवनेऽस्मिन्नथ निष्क्रियो वा संकीर्णधर्मापतितोऽशुचिर्वा।**
**दृष्टस्त्वया येन न ते विवत्सा तद्ब्रूहि यावद्रुचितोऽस्तु वासः॥४२॥**

अथ प्रश्ने 'मङ्गलानन्तरारम्भ प्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः, किमस्मिंस्तपोवने त्वया कश्चित् कोऽपि निष्क्रियः अकर्मण्यः, संकीर्णे क्षुद्रे धर्मे आपतितः सर्वथामग्नः, अथवा अशुचिः अपवित्रः दृष्टः? येन कारणेन ते तव अत्र विवत्सा वस्तुमिच्छा न अस्तीति शेषः। तत् तस्माद् ब्रूहि कथय यावत् कालं वासः अत्र स्थितिः रुचितः रुचिकरा अस्तु भवतु तवेति शेषः।

**इमे हि वाञ्छन्ति तपः सहायं तपो निधानप्रतिमं भवन्तम्।**
**वासस्त्वया हीन्द्रसमेन सार्धं बृहस्पतेरप्युदयावहः स्यात् ॥४३॥**

हि निश्चयेन इमे त्वां परिवार्यस्थिताः तापसास्तपस्विनः तपोनिधानप्रतिमं तपोनिधिरूपं त्वां तपः सहायं तपसि आत्मसहचरं वाञ्छन्ति इच्छन्ति। त्वमपि एभिः सह तपः कुर्या इत्येषामिच्छा, हि यतः इन्द्रसमेन इन्द्रसदृशेन त्वया सार्धं सह वासः बृहस्पतेः देवगुरोः अपि अभ्युदयम् आवहति आनयति तथाभूतः भाग्योदयकारकः

अत्र मुक्तिरूपाभ्युदयप्रापकःस्याद्भवेत्। येन सह वासो देवगुरोरप्यभ्युदयावहः स्यादन्येषान्तु कथं नेतिभावः।

**इत्येवमुक्तः स तपस्विमध्ये तपस्विमुख्येन मनीषिमुख्यः।**
**भवप्रणाशाय कृतप्रतिज्ञः स्वं भावमन्तर्गतमाचचक्षे ॥ ४४ ॥**

तपस्विमध्ये तापसानां समक्षं तपस्विमुख्येन तपस्विनां मुख्येन प्रधानेन इत्येवम् उक्त प्रकारेण उक्ते कथिते ( सति ) भवस्य जन्मनः 'भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः, इति मेदिनी। प्रणाशाय प्रकर्षेण नाशाय कृता प्रतिज्ञा येन स कृतसङ्कल्पः मनीषिषु धीरेषु प्रज्ञेषु वा 'धीरो मनीषीज्ञः प्रज्ञः, इत्यमरः। मुख्यः श्रेष्ठः स सर्वार्थसिद्धः स्वमात्मनः अन्तर्गतं हृत्स्थं भावमाशयं आचचक्षे कथयामास।

**ऋज्वात्मनां धर्मभृतां मुनीनामिष्टातिथित्वात्स्वजनोपमानाम्।**
**एवंविधैर्मां प्रति भावजातैः प्रीतिः परा मे जनितश्च मानः॥ ४५ ॥**

ऋजुः सरलः आत्मा येषां तथाभूतानां धर्मभृतां धर्मपालकानाम् इष्टातिथित्वात् प्रियातिथिभावात स्वजनोपमानाम् आत्मीयकल्पानां मुनीनाम् मां प्रति मद्विषयेएवंविधैः उक्तैः भावजातैः भावसमूहैः 'जातं जात्योघजन्मसु' इत्यमरः। मे मम परा महती प्रीतिः अनुरक्तिः जनिता च तथा परः मानः जनितः उत्पादितः। इन्द्रवज्राख्यं वृत्तम्।

**स्निग्धाभिराभिर्हृदयंगमाभिः समासतः स्नात इवास्मि वाग्भिः।**
**रतिश्च मे धर्मनवग्रहस्य विस्पन्दिता सम्प्रति भूय एव ॥४६॥**

समासतः संक्षेपतः स्निग्धाभिः स्नेहपूर्णैः अतएव हृदयंगमाभिः हृदयस्पर्शिभिः आभिः युष्मदुच्चरितैः वाग्भिः वचोभि' स्नात इव पवित्रीकृत इवास्मीति भावः। च तथा मे मम धर्मे नवः नूतनः यः ग्रहः अनुरोधः तस्य रतिः अभिरुचिः सम्प्रति अधुना भूय एव पुनरपि विस्पन्दिता सञ्चालिता उद्बोधितेति भावः। तपस्विनां स्नेहसिक्तव्यवहारेण वचनैश्चाधुना सिद्धार्थस्य मुक्तयेऽभिलाषोऽत्यर्थमुद्बुद्धः इत्याशयः।

**एवं प्रवृत्तान् भवतः शरण्यानतीव सन्दर्शितपक्षपातान्।**
**यास्यामि हित्वेति ममापि दुःखं यथैव बन्धूंस्त्यजतस्तथैव ॥ ४७ ॥**

एवम् इत्थं प्रकृष्टं वृत्तं चरित्रं येषां तान् प्रवृत्तान् 'वृत्तं पद्ये चरित्रे' इत्यमरः। अतीव अत्यर्थं सम् सम्यग् दर्शितः प्रकटितः पक्षपातः प्रेमातिशयः यैस्तान्, शरणाय साधून् शरण्यान् शरणयोग्यान् भवतः हित्वा त्यक्त्वा यास्यामि गमिष्यामीति अनेन विचारेण ममापि तथैव तादृशमेव दुःखं भवतीति शेषः यथैव बन्धून् बान्धवान् त्यजतः।

एवं सति किमर्थं भवानत्र न तिष्ठतीति तदाहाग्रिमश्लोकद्वयेन।

**स्वर्गाय युष्माकमयं तु धर्मो ममाभिलाषस्त्वपुनर्भवाय।**
**अस्मिन्वने येन न मे विवत्सा भिन्नः प्रवृत्त्या हि निवृत्तिधर्मः ॥४८॥**

युष्माकम् अयं तपोनुष्ठानरूपो धर्मः तु स्वर्गाय स्वर्गप्राप्त्यर्थं, ममाभिलाषस्तु ममेच्छा तु अपुनर्भवाय भवप्रणाशाय मुक्तये वा इत्ययं महान् भेदः ये मे मम अस्मिन्वने विवत्सा वस्तुमिच्छा न नास्तीति शेषः। हि यतः निवृत्तिधर्मः मोक्षधर्मः प्रवृत्त्या सकामधर्माद् भिन्नः अस्तीति शेषः।

**तन्नारतिर्मे न परापचारो वनादितो येन परिव्रजामि।**
**धर्मे स्थिताः पूर्वयुगानुरूपे सर्वे भवन्तो हि महर्षिकल्पाः ॥ ४९ ॥**

येन इतो वनाद् अस्माद् वनात परिव्रजामि गच्छामि तत् मे मम अरतिः अरुचिः न परैः अपचारः अहिताचरणं परेषाम् अपचारः दुराचरणं वा न अस्तीति शेषः। हि यतः पूर्वयुगानुरूपे पूर्वयुगसदृशे धर्मेस्थिताः पूर्वयुगवद् धर्माचरणं कुर्वन्तः भवन्तः सर्वे महर्षीणां कल्पाः सदृशाः सन्ति।

**ततो वचः सूनृतमर्थवच्च सुश्लक्ष्णमोजस्वि च गर्वितं च।**
**श्रुत्वा कुमारस्य तपस्विनस्ते विशेषयुक्तं बहुमानमीयुः ॥ ५० ॥**

ततः स्वान्तर्गतभावकथनानन्तरं कुमारस्य सिद्धार्थस्य सूनृतं प्रियं सत्यं च, अर्थवच्च सारवच्च, सुश्लक्ष्णं सुमधुरं संक्षिप्तं वा ओजस्वि च प्रभावशालि च, गर्वेण अन्वितं मानयुक्तं वचः वचनं श्रुत्वा ते परिवार्य स्थिताः तपस्विनस्तापसाः विशेषयुक्तम् असाधारणं बहुमानम् अत्यधिकमानम्, ईयुः गताः। कुमारस्योदारमाशयं ज्ञात्वा तेषां हृदयानि तं प्रति सविशेषं समादरपूर्णानि जातानि।

**कश्चिद्द्विजस्तत्र तु भस्मशायी प्रांशुः शिखी दारवचीरवासाः।**
**आपिङ्गलाक्षस्तनुदीर्घघोणः कुण्डैकहस्तो गिरमित्युवाच ॥५१॥**

तत्र तेषु भस्मनि शेते इति भस्मशायी, प्रांशुः अतितेजस्वी, शिखा अस्यास्तीति शिखी जटीतियावत्, दारवचीरवासाः तरुत्वग्धारी, आ ईषत्पिङ्गले कपिलवर्णे अक्षिणी यस्य स, 'कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः तन्वी कृशा दीर्घा च घोणा नासिका यस्य सः, 'घोणा नासा च नासिका, इत्यमरः। कुण्डं पात्रविशेषः कमण्डलुर्वा एकं केवलः हस्ते यस्य स तथाविधः कश्चिद् द्विजः इति वक्ष्यमाणां गिरं वाचमुवाच। वृत्तमिन्द्रवज्रा।

**धीमन्नुदारः खलु निश्चयस्ते यस्त्वं युवा जन्मनि दृष्टदोषः।**
**स्वर्गापवर्गौ हि विचार्यसम्यग्यस्यापवर्गे मतिरस्ति सोऽस्ति ॥५२॥**

हे धीमन् बुद्धिमन्, ते तव निश्चयः भवप्रणाशनरूप उदारः, खलु महान् एव। यस्त्वं युवा युवकः सन् जन्मनि प्रवृत्तौ दृष्टः लक्षितः दोषः येन तथाभूतः असि।

स्वर्गं प्रवृत्तिम् अपवर्गं मोक्षं निवृत्तिंच सम्यक् पूर्णतया विचार्य आलोच्य हि एव यस्य अपवर्गे मोक्षे मतिः प्रवृत्तिः रुचिर्वा अस्ति स सात्विको बुद्धिसम्पन्नः भवान् अस्ति। सात्विकी बुद्धिस्तु 'प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये, बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी। इति गीता। इन्द्रवज्राख्यंवृत्तम्।

**यज्ञैस्तपोभिर्नियमैश्च तैस्तैः स्वर्गं यियासन्ति हि रागवन्तः।**
**रागेण सार्धं रिपुणेव युद्ध्वा मोक्षं परीप्सन्ति तु सत्त्ववन्तः॥५३॥**

तैस्तैः विविधैः यज्ञैः तपोभिः व्रतैश्च करणैः रागवन्तः राजसाः साधकाः हि निश्चयेन स्वर्गं यियासन्ति गन्तुमिच्छन्ति राजस-साधकास्तु गीतायाम्-'रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः। हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः। इति

तु किन्तु सत्त्वं विद्यते एषामिति सत्त्ववन्तः। सत्त्वं सांख्य शास्त्रे प्रकाशसाधनम् 'तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्' इति गीता सात्त्विकाः साधकाः रागेण सार्धं रिपुणा शत्रुणा सह इव युद्ध्वा मोक्षं मुक्तिं परितः सर्वतोभावेन ईप्सन्ति इच्छन्ति। सात्त्विकसाधकस्तु गीतायाम्-'मुक्तसङ्गोऽनहं-वादी धृत्युत्साहसमन्वितः। सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते' इति। इन्द्रवज्राख्यं वृत्तम्।

**तद्बुद्धिरेषा यदि निश्चिता ते तूर्णं भवान् गच्छतु विन्ध्यकोष्ठम्।**
**असौ मुनिस्तत्र वसत्यराडो यो नैष्ठिके श्रेयसि लब्धचक्षुः॥५४॥**

तद्यदि ते तव एषा सात्त्विकी बुद्धिः निश्चिता स्थिरा (तदा) भवान् तूर्णं शीघ्रं विन्ध्यकोष्ठं विन्ध्यप्रदेशं गच्छतु। तत्र विन्ध्याचले असौ मुनिः स मुनिः अराडः इत्याख्यः वसति यः निष्ठा संहारः संसारसमाप्तिर्वा प्रयोजनमस्येति नैष्ठिकं तस्मिन्नैष्ठिके 'निष्ठा स्त्री संहारश्च समापने' इति शब्दार्णवः। श्रेयसि मोक्षे लब्धं चक्षुः दृष्टिः येन तथा भूतः अस्ति।

**तस्माद्भवाञ्छ्रोष्यति तत्त्वमार्गं सत्यां रुचौ संप्रतिपत्स्यते च।**
**यथा तु पश्यामि मतिस्तथैषा तस्यापि यास्यत्यवधूय बुद्धिम्॥५५॥**

तस्माद् अराडाद् भवान् तस्य भावस्तत्त्वं तस्य मार्गं परमात्ममार्गं सत्यमार्गं वा 'तत्त्वं परात्मनि' इति हैमः। श्रोष्यति। रुचौ इच्छायां सत्यां सम्प्रतिपत्स्यते च स्वीकरिष्यति च भवानितिसम्बध्यते। तु किन्तु यथा अहं पश्यामि स्पष्टोच्चघोणमित्यादिभिर्वैच्यमाणमुखमण्डललक्षणैर्विचारयामि तथा एषा तव मतिः तस्यापि अराडस्यापि बुद्धिं मतिं अवधूय तिरस्कृत्य यास्यति। तव ज्ञानपिपासां शमयितुमराडस्य बुद्धिरपि समर्था न भविष्यतीतिभावः।

**स्पष्टोच्चघोणां विपुलायताक्षं ताम्राधरौष्ठं सिततीक्ष्णदंष्ट्म ।**
**इदं हि वक्त्रं तनुरक्तजिह्वं ज्ञेयार्णवं पास्यति कृत्स्नमेव ॥ ५३ ॥**

स्पष्टा उच्चा च घोणा नासिका यत्र, विपुले महती आयते दीर्घे च अक्षिणी यत्र, ताम्रः ताम्रवर्णः अधरौष्ठः यत्र, सिताः श्वेताः तीक्ष्णा दंष्ट्रा यत्र, तन्वी कृशा रक्ता च जिह्वा यत्र तद् इदं पुरोवर्ति ते तव वक्त्रं मुखं कृत्स्नमेव सम्पूर्णमेव ज्ञेयार्णवं ज्ञानसागरं पास्यति । त्वं जरामरणमोक्षाय यतमानः सर्वं ब्रह्मज्ञानमधिगमिष्यसीति भावः। तथा च भगवद्गीता—'जरामरणमोक्षाय मामाश्रित्य यतन्ति ये, ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्' इति ।

**गम्भीरता या भवतस्त्वगाधा या दीप्तता यानि च लक्षणानि ।**
**आचार्यकं प्राप्स्यसि तत्पृथिव्यां यन्नर्षिभिः पूर्वयुगेऽप्यवाप्तम ॥५७॥**

भवतः या अगाधा अतलस्पर्शिनी गभीरता गम्भीरता स्थिरता वा या च दीप्तता तेजः यानि चोक्तानि स्पष्टोच्चघोणामित्यादि प्रतिभावत्त्वसूचकानि लक्षणानि तैः करणैस्त्वं पृथिव्यां भूमण्डले तत् तथाविधम् आचार्यस्य कर्म भावो वा आचार्यकम् आचार्य-पदं प्राप्स्यसि यद् यथाविधम् ऋषिभिः पूर्वयुगेऽपि न अवाप्तम् प्राप्तम्। भवानपूर्वामाचार्यपदवीमधिगमिष्यतीति सारः । वृत्तमिन्द्रवज्राख्यम् ।

**परममिति ततो नृपात्मजस्तमृषिजनं प्रतिनन्द्य निर्ययौ ।**
**विधिवदनुविधाय तेऽपि तं प्रविविशुराश्रमिणस्तपोवनम ॥५८॥**

परमम् इति स्वीकारे 'ओमेवं परमं मते' इत्यमरः । परमम् ओम् इत्यनेन प्रकारेण तस्य तपोधनस्य सम्मतिं स्वीकृत्य नृपात्मजः राजपुत्रः सिद्धार्थः त परिवार्यस्थितम ऋषिजनं 'जातावेकवचनम्' इति । प्रतिनन्द्य अभिनन्द्य प्रसाद्य वा ततस्तस्माद् वृक्षमूलात् निर्ययौ निर्जगाम। ते तपस्विनोऽपि विधिवद् विधिपूर्वकं यथाशास्त्रं वा अनु सदृशं विधाय कृत्वा अवसरोचितविसर्जनक्रियां सम्पाद्य उचितरीत्या तं विसृज्येति भावः तपोवनं प्रविविशुः प्रविष्टवन्तः । अपरवक्त्राख्यं वृत्तम ।

इति बुद्धचरिते महाकाव्ये अन्वयार्थदीपिकायां तपोवन-प्रवेशो नाम सप्तमः सर्गः

---

# अथ रघुवंशम् संजीविन्या समेतम्

# द्वितीयः सर्गः

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥१॥

अथ निशानयनानन्तरं यशोधनः प्रजानामधिपः प्रजेश्वरः प्रभाते प्रातःकाले जायया सुदक्षिणया प्रतिग्राहयित्र्या प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहित-गन्धमाल्या तां तथोक्ताम्। पीतं पानमस्यास्तीति पीतः। पीतवानित्यर्थः। 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः। 'पीता गावो भुक्ता ब्राह्मणाः' इति महाभाष्ये दर्शनात्। पीतः प्रतिबद्धो वत्सो यस्यास्तामृषेर्धेनुं वनाय वनं गन्तुम्। क्रियार्थोपपद इत्यादिना चतुर्थी। मुमोच मुक्तवान्। जायापदसामर्थ्यात् सुदक्षिणायाः पुत्रजनन योग्यत्वमनुसन्धेयम्। तथाहि श्रुतिः—'पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्। तस्यां पुनर्नवो भूत्वा दशमेमासि जायते। तज्जाया जाया भवति यदस्यां जायते पुनः।' इति यशोधन इत्यनेन पुत्रवत्ताकीर्तिलोभाद्राजानहें गोरक्षणे प्रवृत्त इति गम्यते। अस्मिन सर्गे वृत्तमुपजातिः—'अनन्तरोदीरितलक्ष्मभाजो पादौ यदीयावुपजातयस्ताः। इति

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत ॥ २ ॥

पांसवो दोषा आसां सन्तीति पांसुलाः स्वैरिण्यः। स्वैरिणी पांसुला' इत्यमरः 'सिध्मादिभ्यश्च' इति लच्प्रत्ययः। अपांसुलानां पतिव्रतानां धुर्यग्रे कीर्तनीया परिगणनीया मनुष्येश्वरधर्मपत्नी। खुरन्यासैः पवित्राः पांसवो यस्य तम्। 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः' इत्यमरः तस्या धेनोर्मार्गम्। स्मृतिर्मन्वादिवाक्यं श्रुतेर्वेदवाक्यस्यार्थमभिधेयमिव। अन्वगच्छदनुसृतवती च। यथा स्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति तथा सापि गोखुरक्षुण्णमेव मार्गमनुससारेत्यर्थः। धर्मपत्नीत्यत्राश्वघासादिवत्तादर्थ्ये षष्ठी समासः प्रकृतिविकाराभावात। पांसुलपथप्रवृत्तावप्यपांसुलानामिति विरोधालंकारो ध्वन्यते।

निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

दयालुः कारुणिकः । 'स्याद्दयालुः कारुणिकः इत्यमरः । 'स्पृहिगृहि'—इत्यादिना लुच्प्रत्ययः । यशोभिः सुरभिर्मनोज्ञः ।'सुरभिः स्यान्मनोज्ञेऽपि' इति विश्वः । राजा तां दयितां निवर्त्य सौरभेयीं कामधेनु-सुतां नन्दिनीं । धरन्तीति धराः । पचाद्यच् । पयसांधराः पयोधराः स्तनाः । 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । अपयोधराः पयोधराः संपद्यमानाः पयोधरीभूताः । अभूततद्भावे च्विः । 'कुगति प्रादयः । इति समासः । पयोधरीभूताश्चत्वारः समुद्राः यस्यास्ताम् । 'अनेकमन्यपदार्थे' इत्यनेक पदार्थग्रहणं सामर्थ्यात्त्रिपदो बहुव्रीहिः । गोरूपधरामुर्वीमिव । जुगोप ररक्ष । भूरक्षणप्रयत्नेनैव ररक्षेति भावः । धेनुपक्षे पयसा दुग्धेनाधरीभूताश्चत्वारः समुद्रा यस्याः सा तथोक्ताम् । दुग्धतिरस्कृतसागरामित्यर्थः ।

व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥

व्रताय धेनोरनुचरेण । नतु जीवनायेति भावः । तेन दिलीपेन शेषोऽवशिष्टोऽप्यनुयायिवर्गोऽनुचरवर्गो न्यषेधि निवर्तितः । शेषत्वं सुदक्षिणापेक्षया । कथं तर्ह्यात्मरक्षणमत आह—न चेति । तस्य दिलीपस्य शरीररक्षा चान्यतः पुरुषान्तरान्न । कुतः । हि यस्मात्कारणान्मनोः । प्रसूयत इति प्रसूतिः सन्ततिः स्ववीर्यगुप्ता स्ववीर्येणैव रक्षिता । नहि स्वनिर्वाहकस्य परापेक्षेति भावः ।

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥

सम्राण्मण्डलेश्वरः 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । स राजा आस्वादवद्भी रसवद्भिः । स्वाद्युक्तैरित्यर्थः । तृणानां कवलैर्ग्रासैः 'ग्रासस्तु कवलार्थकः, इत्यमरः । कण्डूयनैः खर्जनैः दंशानां वनमक्षिकाणां निवारणैः । 'दंशस्तु वनमक्षिका' इत्यमरः । अव्याहतैरप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च तस्याः धेन्वाः समाराधनतत्परः शुश्रूषासक्तोऽभूत । तदेव परं प्रधानं यस्येति तत्परः । 'तत्परे प्रसितासक्तौ । इत्यमरः ।

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥

भूपतिस्तां गां स्थितां सतीं स्थितः सन् । स्थितिरूर्ध्वावस्थानम् । प्रयातां प्रस्थिता मुच्चलितः प्रस्थितः । निषेदुषीं निषण्णाम् । उपविष्टामित्यर्थः 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः । उगितश्च इति ङीप् । आसनबन्ध उपवेशने धीरः ।

स्थितः । उपविष्टः सन्नित्यर्थः । जलमाददानां पिबन्तीं जलाभिलाषी । पिबन्नित्यर्थः । इत्थं छायेवान्वगच्छदनुसृतवान् ।

**स न्यस्तचिह्नामपि राजलक्ष्मीं तेजो विशेषानुमितां दधानः ।**
**आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥**

न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्यास्तां तथाभूतामपि तेजोविशेषेण प्रभावातिशयेनानुमिताम् । सर्वथा राजैवायं भवेदित्यूहितां राजलक्ष्मीं दधानः स राजा । अनाविष्कृतदानराजिर्बहिरप्रकटितमदरेखः । अन्तर्गता मदावस्था यस्य सोऽन्तर्मदावस्थः । तथाभूतो द्विपेन्द्र इव । आसीत् ।

**लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।**
**रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥**

लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिरुद्ग्रथिता उन्नमय्य ग्रथिता ये केशास्तैरुपलक्षितः । 'इत्थं भूतलक्षणे' इति तृतीया । स राजा । अधिज्यमारोपितमौर्वीकं धनुर्यस्य सोऽधिज्यधन्वा सन् 'धनुषश्च' इत्यनङादेशः । मुनिहोमधेनोः रक्षापदेशाद्रक्षणव्याजात् वन्यान्वने भवान्दुष्टसत्त्वान् दुष्टजन्तून् । द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु । इत्यमरः । विनेष्यन्शिक्षयिष्यन्निव । दावं वनं 'वने च वनवह्नौ च दवो दाव इहेष्यते' इति यादवः । विचचार वने चचारेत्यर्थः । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् इति दावस्य कर्मत्वम् ।

'विसृष्ट'–इत्यादिभिः षड्भिः श्लोकैस्तस्य महामहिमतया द्रुमादयोऽपि राजोपचारं चक्रुरित्याह—

**विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।**
**उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥९॥**

विसृष्टा पार्श्वानुचराः पार्श्ववर्तिनो जना येन तस्य । पाशभृतावरुणेन समस्य तुल्यस्य । 'प्रचेता वरुणः पाशी' इत्यमरः । अनुभावोनेन सूचितः तस्य राज्ञः पार्श्वयोर्द्रुमाः । उन्मदानामुत्कटमदानां वयसां खगानां । 'खगबाल्यादिनोर्वयः' इत्यमरः । विरावैः शब्दैः आलोकस्य शब्दं वाचकमालोकयेति शब्दं । जयशब्दमित्यर्थः 'आलोको जयशब्दः स्यात ' इति विश्वः । उदीरयामासुरिवावदन्निव । इत्युत्प्रेक्षा ।

**मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।**
**अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ १० ॥**

मरुत्प्रयुक्ता वायुना प्रेरिताः बाललता आरात्समीपेऽभिवर्तमानम् 'आराददूरसमीपयोः, इत्यमरः । मरुतो वायोः सखा मरुत्सखोऽग्निः स इवाभातीति मरुत्सखाभम् ।

'आतश्चोपसर्गे । इति कप्रत्ययः अर्च्यं पूज्यं तं दिलीपं प्रसूनैः पुष्पैः । पौरकन्याः पौराश्च ताः कन्या आचारार्थैर्लाजैराचारलाजैरिव । अवाकिरन् । तस्योपरि निक्षिप्तवत्य इत्यर्थः । सखा हि सखायमागतमुपचरतीतिभावः ।

धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तः करणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥११॥

धनुर्भृतोऽप्यस्य राज्ञः । एतेन भयसंभावना दर्शिता । तथापि विशङ्कैर्निर्भीकैरन्तः करणैः कर्तृभिः । दयया कृपारसेनार्द्रो भावोऽभिप्रायो यस्य तद्दयार्द्रभावं तदाख्यातम् । दयार्द्रभावमेतदित्याख्यातमित्यर्थः 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः । तथाविधं वपुर्विलोकयन्त्यो हरिण्योऽक्ष्णां प्रकामविस्तारस्यात्यन्तविशालतायाः फलमापुः । 'विमलं कलुषी-भवच्च चेतः कथयत्येव हितैषिणं रिपुं च । इति न्यायेन स्वान्तःकरण-वृत्तिप्रामाण्यादेव विश्रब्धं ददृशुरित्यर्थः ।

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ १२ ॥

स दिलीपो मारुतपूर्णरन्ध्रैः अत एव कूजद्भिः स्वनद्भिः । कीचकैर्वेणुविशेषैः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । वंशः सुषिरवाद्यविशेषः । 'वंशादिकं तु सुषिरम्' इत्यमरः आपादितं सम्पादितं वंशस्य कृत्यं कार्यं यस्मिन्कर्मणि तत्तथा । कुञ्जेषु लतागृहेषु । 'निकुञ्ज कुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः वन-देवताभिरुद्गीयमानमुच्चैर्गीयमानं स्वं यशः शुश्राव श्रुतवान् ।

पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥१३॥

गिरिषु निर्झराणां वारिप्रवाहाणाम् । 'वारिप्रवाहो निर्झरोझरः । इत्यमरः तुषारैः सीकरैः । 'तुषारो हिमसीकरौ' इति शाश्वतः । पृक्तः संपृक्तोऽनोकहानां वृक्षाणामाकम्पिता नीषत्कम्पितानि पुष्पाणि तेषां यो गन्धः सोऽस्यास्तीति आकम्पितपुष्पगन्धी । ईषत्कम्पित पुष्पगन्धवान् । एवं शीतो मन्दः सुरभिः पवनो वायुरनातपत्रं व्रतार्थं परिहृतच्छत्रम् । अत-एवातपक्लान्तमाचारेण पूतं शुद्धं तं नृपं सिषेवे । आचारपूतत्वात्स राजा जगत्पावनस्यापि सेव्य आसीदिति भावः ।

शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने ॥१४॥

गोप्तरि तस्मिन्राज्ञि वनं गाहमाने प्रविशति वृष्ट्या विनापि । दवाग्निः । 'दवदावौ वनानले' इति हेमः । शशाम । फलानां पुष्पाणां च वृद्धिः । विशेष्यत इति

विशेषा । अतिशयितासीत् । कमार्थे घञ् प्रत्ययः । सत्वेषु जन्तुषु मध्ये । यतश्च निर्धारणम्' इति सप्तमी । अधिकः प्रबलो व्याघ्रादिरूनं दुर्बलं हरिणादिकं न बबाधे ।

**संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।**
**प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥१५॥**

पल्लवस्य रागो वर्णः पल्लवरागः । 'रागोऽनुरक्तौ मात्सर्यक्लेशादौ लोहितादिषु' इति शाश्वतः । स एव ताम्रा पल्लवरागताम्रा पतङ्गस्य सूर्यस्य प्रभा कान्तिः । 'पतङ्गः पक्षिसूर्ययोः' इति शाश्वतः मुनेर्धेनुश्च दिगन्तराणि दिशामवकाशान् । 'अन्तरमवकाशावधि परिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । संचारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयायास्तमयाय, धेनुपक्षे आलयाय चागन्तुं प्रचक्रमे ।

**तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः ।**
**बभौ च सा तेन सतां मतेन श्रद्धेवसाक्षाद्विधिनोपपन्ना ॥१६॥**

मध्यमलोकपालो भूपालः देवतापित्रतिथीनां क्रिया यागश्राद्धदानानि ता एवार्थः प्रयोजनं यस्यास्तां धेनुमन्वगनुपदं ययौ । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः । सतां मतेन सद्भिर्मान्येन । 'मतिबुद्धि'—इत्यादिना वर्तमाने क्तः । 'क्तस्य च वर्तमाने इति षष्ठी । तेन राज्ञोपपन्ना युक्ता सा धेनुः । सतां मते न विधिनानुष्ठानेनोपपन्ना युक्ता साक्षात्प्रत्यक्षा श्रद्धास्तिक्यबुद्धिरिव । बभौ च ।

**स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।**
**ययौ मृगाध्यासित शाद्वलानि श्यामायमानानि वनानि पश्यन् ॥१७॥**

स राजा । पल्वलेभ्योऽल्पजलाशयेभ्य उत्तीर्णानि निर्गतानि वराहाणां यूथानि कुलानि येषु तानि । बर्हाण्येषां सन्तीति बर्हिणा मयूराः । 'मयूरो बर्हिणो बर्ही' इत्यमरः । 'फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः' । आवासवृक्षाणामुन्मुखा बर्हिणा येषु तानि श्यामायमानानि वराहबर्हिणादिमलिनिम्ना अश्यामानि श्यामानि भवन्ति इति श्यामायमानानि । 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्प्रत्ययः । वा क्यषः' इत्यात्मनेपदे शानच् । मृगैरध्यासिता अधिष्ठिताः शाद्वलाः येषु तानि । शादाः शष्पाण्येषु देशेषु सन्तीति शाद्वलाः शष्पश्यामेदशाः । 'शाद्वलः शादहरिते' इत्यमरः । शादः कर्दमशष्पयोः' इति विश्वः । 'नडशादाड्ड्वलच् इति ड्वलच्प्रत्ययः । वनानि पश्यन्ययौ ।

**आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।**
**उभावलंचक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥**

गृष्टिः सकृत्प्रसूता गौः । 'सकृत्प्रसूता गौर्गृष्टिः' इति हलायुधः । नरेन्द्रश्च । उभौ यथाक्रमम् । आपीनमूधः । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । आपीनस्य भारोद्वहने

